## अभ्यासः - 4
### (श्लोकः 6 )

1. **श्लोकं दृष्ट्वा उचित-पदैः रिक्तं स्थानं पूरयत-**
   [ **श्लोक को देखकर उचित पद से रिक्त स्थानों की पूर्ति करें।** See the verse and fill in the blanks with appropriate words. ]

   (i) श्रुत्वा　　　　वाल्मीकेर्नारदो　　　　।
   श्रूयतामिति　　　　वाक्यम्　　॥

2. **श्लोकस्थान् शब्दान् यथानिर्देशं रिक्तस्थानेषु स्थापयत-**
   [ **यथानिर्देश श्लोक के शब्दों को रिक्तस्थानों में रखें।** Fill in the blanks with the words of the verse. ]

   (क) अकारान्ताः (पुं / नपुं) - (i)　　　(ii)　　　(iii)
   (iv)

   (ख) इकारान्तः - (i)

   (ग) सकारान्तः - (i)

3. **यथोचितं विशेषणं विशेष्यं वा पूरयत-**
   [ **उचित विशेषण या विशेष्य से रिक्तस्थान भरें।** Fill in the blanks either with qualifier or qualificand. ]

|  | **विशेषणम्** | **विशेष्यम्** |  | **विशेषणम्** | **विशेष्यम्** |
|---|---|---|---|---|---|
| (i) | त्रिलोकज्ञः<br>प्रहृष्टः } |  | (ii) |  | वचः |

4. **रिक्तस्थानेषु अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत-**
   [ **अधोलिखित प्रश्नों के उत्तर रिक्त स्थान में लिखें।** Write the answers of the following questions in the blank space given. ]

**यथा-** (i) श्लोके 'अब्रवीत्' क्रियापदस्य कर्ता कः ? = ............ **नारदः** ............

(ii) त्रिलोकज्ञः कः अस्ति ? =

(iii) नारदः कम् आमन्त्र्य अब्रवीत् ? =

(iv) कथम्भूतः नारदः वाक्यम् अब्रवीत् ? =

(v) नारदः किम् अब्रवीत् ? =

5. **रिक्तं स्थानं पूरयत-**

[ **रिक्तस्थान की पूर्ति करें।** Fill in the blanks. ]

(i) त्रिलोकज्ञः वाल्मीकेः श्रुत्वा वाक्यम् अब्रवीत्।

(ii) प्रहृष्टः वचनम् अब्रवीत्।

(iii) नारदः श्रूयतामिति च वचनम् अब्रवीत्।

(iv) वाल्मीकेः एतद् श्रुत्वा नारदः अब्रवीत्।

(v) त्रिलोकज्ञः वाल्मीकेः वचः सन् वाक्यम् ।

6. **यथोचितं योजयत-**

[ **सही मेल बनाएं।** Match the following. ]

**यथा-** (i) आमन्त्र्य — क. अ० नपुं० द्विती० एक०

(ii) वचनम् — ख. स्० नपुं० द्विती० एक०

(iii) वचः — ग. ल्यबन्तम् अव्ययम्

(iv) श्रुत्वा — घ. इ० पुं० ष० एक०

(v) वाल्मीकेः — ङ क्त्वान्तम् अव्ययम्

7. **समाधानं लिखत-**

[ **उत्तर लिखें।** Write the answers. ]

**यथा-** (i) "श्रूयताम्" इति कः आमन्त्रितवान् ? **नारदः**

(ii) प्रहृष्टः सन् कः अब्रवीत् ?

(iii) कस्य वचः श्रुत्वा त्रिलोकज्ञः अब्रवीत् ?

(iv) "इह संसारे सर्वश्रेष्ठः पुरुषः कः" इति जिज्ञासां कः कृतवान् ?

**श्लोकः**

**बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।**
**मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥ 7 ॥**

**पदच्छेदः**

बहवः दुर्लभाः च एव ये त्वया कीर्तिताः गुणाः ।
मुने ! वक्ष्यामि अहम् बुद्ध्वा तैः युक्तःश्रूयताम् नरः ॥7 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| बहवः | उ० पुं० प्र० बहु० | वक्ष्यामि | वच् - कर्तरि लृट् उपु० एक० |
| दुर्लभाः | अ० पुं० प्र० बहु० | अहम् | अस्मद् - सर्व० पुं० प्र० एक० |
| एव | अव्ययम् | बुद्ध्वा | क्त्वान्तम् अव्ययम् |
| ये | यद् - द्० सर्व० पुं० प्र० बहु० | तैः | तद् - सर्व० पुं० तृ० बहु० |
| त्वया | युष्मद् - सर्व० पुं० तृ० एक० | युक्तः | अ० पुं० प्र० एक० |
| कीर्तिताः | अ० पुं० प्र० बहु० | श्रूयताम् | श्रु - कर्मणि लोट् प्रपु० एक० |
| गुणाः | अ० पुं० प्र० बहु० | नरः | अ० पुं० प्र० एक० |
| मुने ! | इ० पुं० सम्बो० प्र० एक० | | |

**आकाङ्क्षा**

**हे मुने! अहं वक्ष्यामि।**

| | |
|---|---|
| किं कृत्वा वक्ष्यामि ? | बुद्ध्वा वक्ष्यामि । |
| त्वया किं क्रियताम् ? | श्रूयताम् । |
| कः श्रूयताम् ? | नरः श्रूयताम् । |
| कीदृशः नरः श्रूयताम् ? | त्वया ये बहवः दुर्लभाः गुणाः कीर्तिताः (अकीर्तिताः च) तैः युक्तः नरः श्रूयताम् । |

**अन्वयः**

(हे) मुने ! त्वया ये बहवः दुर्लभाः गुणाः कीर्तिताः तैः युक्तः नरः श्रूयताम् । अहं बुद्ध्वा वक्ष्यामि ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| मुने ! | महर्षे ! (वाल्मीके) | हे महर्षि वाल्मीकि ! | O sage Vālmīki ! |
| त्वया | भवता | आपके द्वारा | by you |
| ये बहवः | ये अनेके | जो अनेक | those manifold |
| दुर्लभाः | दुःखेन लब्धुं योग्याः | दुःख से प्राप्त करने योग्य | rare |
| गुणाः | आदर्शगुणाः | आदर्श गुण | virtues |
| कीर्तिताः | कथिताः | कहे गये हैं | that have been described |
| तैः | उक्तैः गुणैः | उन (उक्त गुणों) से | with the said virtues |
| युक्तः | सम्पन्नः | सम्पन्न | associated |
| नरः | मनुष्यः | मानव | man |
| श्रूयताम् | आकर्ण्यताम् | सुनिए | please hear |
| अहम् | अहम् | मैं | I |
| बुद्ध्वा | अवगत्य | समझकर | having considered |
| वक्ष्यामि | कथयिष्यामि | कहूँगा | shall tell |

**भावार्थः**

**संस्कृतम्**— महर्षिः नारदः वाल्मीकिं प्रति उक्तवान्- हे वाल्मीके ! भवता ये दुर्लभाः गुणाः स्मारिताः ये च अस्मारिताः तैः सम्पन्नं नरम् अहं ब्रवीमि (त्वया) श्रूयताम् इति।

**हिन्दी** — महर्षि नारद वाल्मीकि से बोले- हे वाल्मीकि ! आपने इस संसार में जिन दुर्लभ गुणों का संकीर्तन किया है (नाम गिनाया है) तथा जिनका संकीर्तन नहीं किया है ऐसे गुणों से सम्पन्न मनुष्य का वर्णन करता हूँ, आप ध्यान से सुनिये।

**आंग्लम्**— I shall (duly) consider and tell you (of such a hero). Be pleased to hear (from me) of the man endowed with the manifold and rare virtues that have been described by you.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

| | | |
|---|---|---|
| बहवो दुर्लभाः | – | बहवः + दुर्लभाः (विसर्ग-सन्धिः) |
| दुर्लभाश्चैव | – | दुर्लभाः + चैव (विसर्ग-सन्धिः, श्चुत्वसन्धिश्च) |
| चैव | – | च + एव (वृद्धि-सन्धिः) |
| तैर्युक्तः | – | तैः + युक्तः (विसर्ग-सन्धिः) |
| वक्ष्याम्यहम् | – | वक्ष्यामि + अहम् (यण्-सन्धिः) |
| कीर्तिता गुणाः | – | कीर्तिताः + गुणाः (विसर्ग-सन्धिः) |

**(ख) कर्मणि प्रयोगः**

(लोट्) – (त्वया) श्रूयतां नरः

**(ग) कृदन्तौ**

बुध् + क्त्वा = बुद्ध्वा
युज् + क्त = युक्तः

(ii) **कोशः**

नरः – पुरुषाः पूरुषाः नराः (निघण्टुः)

**अवधेयम्**

**कर्मणि प्रयोगविषये**

## अभ्यासः - 5

**(श्लोकः 7 )**

1. **श्लोकं दृष्ट्वा यथोचितं रिक्तं स्थानं पूरयत-**

   [ **श्लोक को देखकर उचित शब्दों से रिक्त स्थान की पूर्ति करें।** See the verse and fill in the blanks with the appropriate words from the verse. ]

   (i) .................... दुर्लभाश्चैव ये .................... गुणाः ।

   .................... बुद्ध्वा .................... श्रूयतां .................... ॥

2. **यथोदाहरणम् एतेषां पदानां परिचयं लिखत-**

   [ **उदाहरण के अनुसार इन पदों का परिचय लिखें।** Write the analysis of the following words as shown in the example. ]

**यथा–** (i) बहवः – **उ. पुं. प्र. बहु.**

(ii) दुर्लभाः –

(iii) ये –

(iv) त्वया –

(v) अहम् –

(vi) श्रूयताम् –

(vii) तैः –

(viii) कीर्तिताः –

(ix) गुणाः –

(x) नरः –

3. **विशेषण-पदानाम् उचित-विशेष्यपदं लिखत-**

   [ **विशेषणों का विशेष्य लिखें।** Write the appropriate qualificand. ]

बहवः<br>दुर्लभाः<br>ये<br>कीर्तिताः } 

तैः युक्तः

4. **यथोचितं योजयत-**

[ **सही मेल बनाएं।** Match appropriately. ]

| | | | |
|---|---|---|---|
| **यथा-** (i) | बहवः | (क) | कीर्तिताः |
| (ii) | ये त्वया | (ख) | दुर्लभाः गुणाः |
| (iii) | अहं बुद्ध्वा | (ग) | युक्तः नरः त्वया श्रूयताम् |
| (iv) | तैः | (घ) | वक्ष्यामि |

5. **अधोलिखितानां प्रश्नानाम् उत्तराणि लिखत-**

[ **अधोलिखित प्रश्नों के उत्तर लिखें।** Write the answers of the following questions. ]

(i) केन बहवः दुर्लभाः गुणाः कीर्तिताः ? ।

(ii) 'वक्ष्यामि' इति क्रियायाः कर्त्ता कः ? ............ ।

(iii) मुने ! इति कस्य सम्बोधनम् ? ।

(iv) नारदः किं कृत्वा 'वक्ष्यामि' इति उक्तवान् ? ............ ।

6. **यथोदाहरणं रिक्तं स्थानं पूरयत-**

[ **उदाहरण के आधार पर रिक्त स्थान की पूर्ति करें।** Fill in the blanks as shown in the example. ]

**उदा.-** (i) त्वं नरं शृणु – **त्वया नरः श्रूयताम्।**

(ii) त्वं ग्रन्थं पठ – ।

(iii) सः विद्यालयं गच्छतु – ............ ।

(iv) अहं गीतां शृणवानि ? – ............?

(v) त्वं रसं पिब – ।

(vi) सः श्लोकं गायतु – ।

(vii) युवां गुरुं नमतम् – ।

(viii) भगिनी देवीम् अर्चतु – ............ ।

(ix) कविः कवितां करोतु – ।

(x) भक्ताः देवान् पश्यन्तु – ।

**भवतः साहाय्यार्थं क्रियापदानि**

**दृश्यन्ताम्, नम्यताम्, गीयताम्, पीयताम्, श्रूयताम्, गम्यताम्, पठ्यताम्, अर्च्यताम्, क्रियताम्**

7. **यथा-श्लोकं सम्बद्धं पदं योजयत-**

**[श्लोक के अनुसार सम्बद्ध पद को जोड़े।** Match the related words as per the verse. ]

**यथा–**

8. **वच्-धातोः लृट्-लिट्-लकारयोः रूपाणि पूरयत-**

**[ वच् धातु के लृट एवं लिट् लकार के रूप पूर्ण करें।** Complete the verbal form of root *vac* in *ḷṭ* and *liṭ* lakār ]

| लृटि | | | लिटि | | |
|---|---|---|---|---|---|
| वक्ष्यति | | | उवाच | ऊचतुः | ऊचुः |
| | वक्ष्यथः | | उवचिथ | | ऊच |
| | | | | | ऊचिम |

9. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

**[ दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) दुर्लभ (ख) कीर्तित (ग) श्रू (कर्मणि लोटि) (घ) वच् (कर्तरि लृटि) (ङ) बहु

**श्लोकः**

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥ 8 ॥

बुद्धिमान् नीतिमान् वाग्ग्मी श्रीमाञ्छत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥ 9 ॥

महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ 10 ॥

समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ 11 ॥

**पदच्छेदः**

इक्ष्वाकु-वंश-प्रभवः रामः नाम जनैः श्रुतः ।
नियतात्मा महा-वीर्यः द्युतिमान् धृतिमान् वशी ॥ 8 ॥

बुद्धिमान् नीतिमान् वाग्ग्मी श्रीमान् शत्रु-निबर्हणः ।
विपुलांसः महा-बाहुः कम्बु-ग्रीवः महा-हनुः ॥ 9 ॥

महोरस्कः महेष्वासः गूढ-जत्रुः अरिन्दमः ।
आ-जानु-बाहुः सु-शिराः सु-ललाटः सु-विक्रमः ॥ 10 ॥

समः सम-विभक्ताङ्गः स्निग्ध-वर्णः प्रतापवान् ।
पीन-वक्षाः विशालाक्षः लक्ष्मीवान् शुभ-लक्षणः ॥ 11 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| इक्ष्वाकुवंशप्रभवः | अ० पुं० प्र० एक० समस्तम् | जनैः | अ० पुं० तृ० बहु० |
| | | श्रुतः | अ० पुं० प्र० एक० |
| रामः | अ० पुं० प्र० एक० | नियतात्मा | न्० पुं० प्र० एक० समस्तम् |
| नाम | अव्ययम्, प्रसिद्धार्थे | महावीर्यः | अ० पुं० प्र० एक०समस्तम् |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| द्युतिमान् | त्० पुं० प्र० एक० | गूढजत्रुः | उ० पुं० प्र० एक० समस्तम् |
| धृतिमान् | त्० पुं० प्र० एक० | अरिन्दमः | अ० पुं० प्र० एक० समस्तम् |
| वशी | न्० पुं० प्र० एक० | आजानुबाहुः | उ० पुं० प्र० एक० समस्तम् |
| बुद्धिमान् | त्० पुं० प्र० एक० | सुशिराः | सुशिरस् - स्० पुं० प्र० एक० समस्तम् |
| नीतिमान् | त्० पुं० प्र० एक० | | |
| वाग्मी | न्० पुं० प्र० एक० | सुललाटः | अ० पुं० प्र० एक० समस्तम् |
| श्रीमान् | त् पुं० प्र० एक० | सुविक्रमः | अ० पुं० प्र० एक० समस्तम् |
| शत्रुनिबर्हणः | अ० पुं० प्र० एक० समस्तम् | समः | अ० पुं० प्र० एक० |
| विपुलांसः | अ० पुं० प्र० एक० समस्तम् | समविभक्ताङ्गः | अ० पुं० प्र० एक० समस्तम् |
| महाबाहुः | उ० पुं० प्र० एक० समस्तम् | स्निग्धवर्णः | अ० पुं० प्र० एक० समस्तम् |
| कम्बुग्रीवः | अ० पुं० प्र० एक० समस्तम् | प्रतापवान् | त्० पुं० प्र० एक० |
| महाहनुः | उ० पुं० प्र० एक० समस्तम् | पीनवक्षाः | स्० पुं० प्र० एक० समस्तम् |
| महोरस्कः | अ० पुं० प्र० एक० समस्तम् | विशालाक्षः | अ० पुं० प्र० एक० समस्तम् |
| महेष्वासः | अ० पुं० प्र० एक० समस्तम् | लक्ष्मीवान् | त्० पुं० प्र० एक० |
| | | शुभलक्षणः | अ० पुं० प्र० एक० समस्तम् |

**आकाङ्क्षा**

**श्रुतः।**

| | |
|---|---|
| कः श्रुतः ? | रामः नाम (प्रसिद्धः) श्रुतः। |
| रामः नाम कैः श्रुतः ? | रामः नाम जनैः श्रुतः। |
| जनैः कीदृशः रामः श्रुतः ? | जनैः इक्ष्वाकुवंशप्रभवः रामः श्रुतः। |
| पुनश्च कीदृशः रामः श्रुतः ? | नियतात्मा महावीर्यः द्युतिमान् धृतिमान् वशी रामः श्रुतः। |
| पुनश्च कीदृशः रामः श्रुतः ? | बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः विपुलांसः महाबाहुः कम्बुग्रीवः महाहनुः रामः श्रुतः। |
| पुनश्च कीदृशः रामः श्रुतः ? | महोरस्कः महेष्वासः गूढजत्रुः अरिन्दमः आजानुबाहुः सुशिराः सुललाटः सुविक्रमः रामः श्रुतः। |
| पुनश्च कीदृशः रामः श्रुतः ? | समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् पीनवक्षाः विशालाक्षः लक्ष्मीवान् शुभलक्षणः च रामः श्रुतः। |

**अन्वयः**

(हे मुने !) नियतात्मा महावीर्यः द्युतिमान् धृतिमान् वशी इक्ष्वाकुवंशप्रभवः रामः नाम जनैः श्रुतः (अस्ति) ॥ 8. ॥ (सः रामः) बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः विपुलांसः महाबाहुः कम्बुग्रीवः महाहनुः च (अस्ति ।) ॥ 9 ॥ (सः रामः) महोरस्कः महेष्वासः गूढजत्रुः अरिन्दमः आजानुबाहुः सुशिराः सुललाटः सुविक्रमः (च अस्ति) ॥ 10 ॥ (सः रामः) समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् पीनवक्षाः विशालाक्षः लक्ष्मीवान् शुभलक्षणः ( च अस्ति) ॥ 11 ॥

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| नियतात्मा | स्वाधीनान्तःकरणः | स्वाधीन अन्तःकरण वाला | self controlled |
| महावीर्यः | महौजाः | अत्यधिक सामर्थ्यशाली | very powerful |
| द्युतिमान् | कान्तियुक्तः | कान्तियुक्त | radiant |
| धृतिमान् | धैर्यसंयुतः | धैर्यशाली | resolute |
| वशी | जितेन्द्रियः | जितेन्द्रिय | one who has conqu-ired oversense organs |
| इक्ष्वाकुवंश-प्रभवः | इक्ष्वाकु-कुले जातः | इक्ष्वाकुवंश में उत्पन्न | born in *Ikṣvāku* dynasty |
| रामः नाम | राम इति नाम्ना प्रसिद्धः | राम नाम से प्रसिद्ध | by the name 'Rāma' |
| जनैः | मानवैः | साधारण जनों के द्वारा | by common men |
| श्रुतः | ज्ञातः | विज्ञात | known |
| बुद्धिमान् | प्रशस्तबुद्धिसम्पन्नः | प्रशस्त बुद्धि युक्त | intelligent |
| नीतिमान् | नीतिज्ञः | नीति के ज्ञाता | sagacious |
| वाग्मी | प्रशस्तवक्ता | अच्छा वक्ता | eloquent |
| श्रीमान् | श्रीसम्पन्नः | शोभा से युक्त | glorious |
| शत्रुनिर्बहणः | रिपुनाशकः | शत्रु का नाश करने वाला | exterminator of foes |
| विपुलांसः | उन्नतस्कन्धः | उन्नत स्कन्धों वाला | distinguished with broad shoulder |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| महाबाहुः | दीर्घबाहु | विशाल बाँहों वाला | having powerful arms |
| कम्बुग्रीवः | शङ्ख-तुल्य-ग्रीवया युक्तः | शंख सदृश ग्रीवा वाला | having a neck shaped as a conch |
| महाहनुः | मांसल-चिबुकयुक्तः | पुष्ट ठुड्डी वाला | having stout chin |
| महोरस्कः | विशालवक्षःस्थलः | विशाल छाती वाला | having broad chest |
| महेष्वासः | महाधनुर्धरः | विशाल धनुष वाला | holding mighty bow |
| गूढजत्रुः | अप्रकाश्य-स्कन्धास्थिः | अप्रकाशित हँसुली (स्कन्ध की हड्डी) वाला | whose collar bone covered with flesh |
| अरिन्दमः | शत्रुदमनः | शत्रुओं का दमन करने वाला | capable of subdu-ing his foes |
| आजानुबाहुः | जानुपर्यन्तं लम्बमान-बाहुयुक्तः | घुटने तक लम्बी भुजाओं वाला | whose arms extended right upto his knees |
| सुशिराः | शोभनशिरस्कः | सुन्दर शिर वाला | having well formed head |
| सुललाटः | सुन्दरललाटसम्पन्नः | सुन्दर ललाट वाला | having shapely forehead |
| सुविक्रमः | शोभनगतियुक्तः | सुन्दर गति से चलने वाला | possessed of charming gait |
| समः | समुचिताकारः | समुचित आकार वाला | possessed of medium stature |
| समविभक्ताङ्गः | सुघटितावयवः | सुगठित अंगों वाला | having well propor-tionised limbs |
| स्निग्धवर्णः | स्नेहिलवर्णः | आकर्षक | having unctuous complexion |
| प्रतापवान् | प्रतापशाली | प्रभावी | mighty |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| पीनवक्षाः | अभ्युन्नतवक्षःस्थलः | चौड़ी छाती वाला | having rounded chest |
| विशालाक्षः | आयतलोचनः | बड़ी-बड़ी आँखों वाला | having large eyes |
| लक्ष्मीवान् | सौन्दर्यसम्पन्नः | शोभासम्पन्न | full of splendour |
| शुभलक्षणः | प्रशस्तचिह्नोपेतः | शुभ लक्षणों से युक्त | associated with auspicious marks |

**भावार्थः**

**संस्कृतम्**— असौ (पुरुषः) स्वाधीनमनाः महापराक्रमी कान्तिमान् धैर्यवान् जितेन्द्रियः इक्ष्वाकुवंशे समुत्पन्नः जनेषु प्रसिद्धः रामः अस्ति ॥ 8 ॥ सः रामः प्रखर-प्रतिभा-सम्पन्नः नीति-निष्णातः श्रेष्ठ-वक्तृत्व-सम्पन्नः शोभावान् शत्रु-संहारकः विशाल-स्कन्धः आजानुबाहुः शंखतुल्यग्रीवः प्रशस्तहनुश्च अस्ति ॥ 9 ॥ (सः रामः) विशालवक्षःस्थलः महाधनुर्धरः मांसलतया पिहित-स्कन्धास्थिः शत्रुसंहारे समर्थः जानुपर्यन्तं लम्बायमान-बाहुयुगलः शोभनशिरस्कः सुललाटः शोभन-गतिशीलश्च (अस्ति) ॥ 10 ॥ सः रामः समुचिताकृतिः (नातिदीर्घः नातिक्षुद्रः) अङ्गसौष्ठवसम्पन्नः आकर्षकः तेजस्वी अभ्युन्नतवक्षस्थलः आयतलोचनः सौन्दर्यसम्पन्नः शुभलक्षणोपेतश्च अस्ति ॥ 11 ॥

**हिन्दी**— इक्ष्वाकुवंश में उत्पन्न (वह सर्वश्रेष्ठगुण सम्पन्न) सामान्य जनों मे भी प्रसिद्ध 'राम' हैं जो कि स्वाधीन अन्तःकरणवाले, महापराक्रमी, लोकोत्तर कान्तिसम्पन्न, धैर्यवान् तथा जितेन्द्रिय हैं ॥ 8 ॥ वे श्रेष्ठ प्रतिभा से सम्पन्न, नीतिज्ञ, श्रेष्ठवक्ता, शोभासम्पन्न, शत्रुजयी, विशाल कन्धों वाले, लम्बी भुजाओं वाले, शंखसदृश सुन्दर-कण्ठों वाले एवं सुन्दर कपोलवान् हैं ॥ 9 ॥ वे विशाल वक्षस्थल वाले, श्रेष्ठ धनुर्धर, मांसल होने के कारण छिपी हुई स्कन्ध-अस्थि वाले, शत्रुविनाशक, जानु (घुटने) पर्यन्त लम्बी भुजाओं वाले, सुन्दर शिर वाले, सुन्दर भाल वाले तथा आकर्षक गति वाले हैं। वे समुचित आकार वाले, सुगठित अंगों वाले, आकर्षक, पराक्रमी, उन्नत वक्ष वाले, बड़ी बड़ी आँखों वाले, अत्यन्त शोभनीय एवं शुभलक्षणों से युक्त हैं ॥ 11 ॥

**आंग्लम्**— There is one descended in the line of *Ikṣvāku* and known by men by the name of Rāma. He has fully controlled his mind, very powerful, radiant and resolute has brought his senses under control. (8) He is intelligent, sagacious, eloquent, glorious and exterminator of foes. He is distinguished with broad shoulders, powerful arms, a neck-shaped as a conch and a stout chin. (9) He is marked with a broad chest, mighty bow and a collar bone covered with flesh and is capable of subduing his foes. His (unusually long) arms extend right up to his knees. He has well formed head, a shapely

forehead and a charming gait. (10) He is of medium stature (neither very tall nor very short) has well proportioned limbs, has an unctuous complexion, is mighty, has a rounded chest, large eyes, is full of splendour and has auspicious marks on his body. (11)

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

रामो नाम – रामः + नाम (विसर्ग-सन्धिः)
महावीर्यो द्युतिमान् – महावीर्यः + द्युतिमान् (विसर्ग-सन्धिः)
श्रीमाञ्छत्रुनिबर्हणः – श्रीमान् + शत्रुनिबर्हणः (हल्-सन्धिः[1])
लक्ष्मीवाञ्छुभलक्षणः – लक्ष्मीवान् + शुभलक्षणः (हल्-सन्धिः)
गूढजत्रुररिन्दमः – गूढजत्रुः + अरिन्दमः (विसर्ग-सन्धिः)

**(ख) समासः**

इक्ष्वाकुवंशप्रभवः – इक्ष्वाकोः वंशः इक्ष्वाकुवंशः (ष० तत्पु०); इक्ष्वाकुवंशः प्रभवः यस्य सः इक्ष्वाकुवंशप्रभवः (बहुव्रीहिः) {प्रभवः = उत्पत्ति-स्थानम्}
नियतात्मा – नियतः आत्मा यस्य सः नियतात्मा (बहुव्रीहिः) {आत्मा = स्वभावः}
महावीर्यः – महद् वीर्यं यस्य सः महावीर्यः (बहुव्रीहिः) {वीर्यम् = ओजः }
विपुलांसः – विपुलौ अंसौ यस्य सः विपुलांसः (बहुव्रीहिः) {विपुलौ = उन्नतौ, अंसौ = स्कन्धौ}
महाबाहुः – महान्तौ बाहू यस्य सः महाबाहुः (बहुव्रीहिः) {बाहुः = भुजः}
कम्बुग्रीवः – कम्बुः इव ग्रीवा यस्य सः कम्बुग्रीवः (बहुव्रीहिः)
महाहनुः – महत्यौ हनू यस्य सः महाहनुः (बहुव्रीहिः)
महोरस्कः – महद् उरः यस्य सः महोरस्कः (बहुव्रीहिः कप्-प्रत्ययश्च)

---

1. *नकारस्य श्चुत्वेन ञ्-कारः शकारस्य छत्वम्*

| | | |
|---|---|---|
| महेष्वासः | – | महान् इष्वासः यस्य सः महेष्वासः (बहुव्रीहिः) {इष्वासः = धनुः} |
| गूढजत्रुः | – | गूढे जत्रुणी यस्य सः गूढजत्रुः (बहुव्रीहिः) {गूढम् = निमग्नम्, जत्रु = वक्षसः अंसयोश्च सन्धौ अस्थिविशेषः} |
| आजानुबाहुः | – | आजानुभ्याम् इति आजानु (अव्ययीभावः) आजानु बाहू यस्य सः आजानुबाहुः (बहुव्रीहिः) |
| सुशिराः | – | शोभनं शिरः यस्य सः (बहुव्रीहिः) |
| सुललाटः | – | शोभनः ललाटः यस्य सः (बहुव्रीहिः) |
| सुविक्रमः | – | शोभनः विक्रमः यस्य सः (बहुव्रीहिः) {विक्रमः = पादविक्षेपः} |
| समविभक्ताङ्गः | – | समानि विभक्तानि अङ्गानि यस्य सः (बहुव्रीहिः) {समम् = न अतिह्रस्वं न च अति दीर्घं सुघटितम् इत्यर्थः} |
| स्निग्धवर्णः | – | स्निग्धः वर्णः यस्य सः (बहुव्रीहिः) {स्निग्धः = स्नेहयुक्तः} |
| पीनवक्षाः | – | पीनं वक्षः यस्य सः (बहुव्रीहिः) |
| विशालाक्षः | – | विशाले अक्षिणी यस्य सः (बहुव्रीहिः) |
| शुभलक्षणः | – | शुभं लक्षणं यस्य सः (बहुव्रीहिः) |
| शत्रुनिबर्हणः | – | शत्रूणां निबर्हणः (ष० तत्पु०) |

**(ग) कृदन्तौ**

| | | |
|---|---|---|
| श्रुतः | – | श्रु + क्त |
| निबर्हणः | – | नि + बर्ह + ल्यु |

**(घ) तद्धितान्ताः**

| | | |
|---|---|---|
| द्युतिमान् (द्युतिमत्) | – | द्युतिः अस्मिन् अस्ति (द्युति + मतुप्) |
| धृतिमान् (धृतिमत्) | – | धृतिः अस्मिन् अस्ति (धृति + मतुप्) |
| बुद्धिमान् (बुद्धिमत्) | – | प्रशस्ता बुद्धिः अस्य अस्ति (बुद्धि + मतुप्) |
| नीतिमान् (नीतिमत्) | – | नीतिः अस्य अस्ति (नीति + मतुप्) |
| वाग्मी (वाग्मिन्) | – | प्रशस्ता वाक् अस्य अस्ति (वाच् + ग्मिनि) |

श्रीमान् (श्रीमत्) – श्रीः अस्मिन् अस्ति (श्री + मतुप्)
लक्ष्मीवान् (लक्ष्मीवत्) – लक्ष्मीः अस्य अस्मिन् वा अस्ति (लक्ष्मी + मतुप्)
वशी (वशिन्) – वशः अस्य अस्ति (वश + इनि)

(ii) **कोशः**

हनुः – अधस्ताच्चिबुकं गण्डकपोलौ तत्परा हनुः (अमरकोशः)
कम्बुग्रीवा – रेखात्रयान्विता ग्रीवा कम्बुग्रीवेति कथ्यते (हलायुधकोशः)
प्रतापः – प्रतापौ पौरुषातपौ (कोशः)
धृतिः – धृतिस्तु तुष्टि-सन्तोषः (वैजयन्तीकोशः)
स्कन्धः – स्कन्धो भुजशिरोंऽसः (अमरकोशः)
जत्रु – स्कन्धो भुजशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी (अमरकोशः)

**अवधेयम्**

(i) **बहुव्रीहिविषये**
(ii) **मत्वर्थीयप्रत्ययेषु इनि-ग्मिनि-प्रभृतिविशेषप्रत्ययविषये**

---

## अभ्यासः – 6
## (श्लोकः 8-11)

1. **श्लोकानाम् उचितैः पदैः रिक्तं स्थानं पूरयत-**
[**श्लोकों के उचित पदों से रिक्तस्थानों की पूर्ति करें।** Fill in the blanks with appropriate words of the verses. ]

(i) इक्ष्वाकुवंशप्रभवः ______ श्रुतः ।
______ महावीर्यः ______ वशी ॥

(ii) बुद्धिमान् ______ निबर्हणः ।
______ महाबाहुः ______ ॥

(iii) महेष्वासो ।
आजानुबाहुः सुविक्रमः ॥

(iv) समः प्रतापवान् ।
पीनवक्षा ..................... लक्ष्मीवान् ॥

2. **अधोलिखितानि पदानि उचितेन अर्थेन योजयत-**
[ **अधोलिखित पदों को उचित अर्थ से जोड़ें।** Match the following words with appropriate meaning. ]

**यथा**– (i) नाम — (घ) प्रसिद्धः

| | | | |
|---|---|---|---|
| (i) | नाम | (क) | आकर्णितः |
| (ii) | श्रुतः | (ख) | प्रशस्तवाक्सम्पन्नः |
| (iii) | वाग्मी | (ग) | विशालनेत्रः |
| (iv) | विशालाक्षः | (घ) | प्रसिद्धः |
| (v) | आजानुबाहुः | (ङ) | शत्रुसूदनः |
| (vi) | शत्रुनिबर्हणः | (च) | आजानुभुजः |
| (vii) | महेष्वासः | (छ) | सुभालः |
| (viii) | सुललाटः | (ज) | महाधनुः |
| (ix) | श्रीमान् | (झ) | इक्ष्वाकुकुलोत्पन्नः |
| (x) | इक्ष्वाकुवंशप्रभवः | (ञ) | श्रीसम्पन्नः |

3. **यथोदाहरणं सन्धिं सन्धिविच्छेदं वा कुरुत-**
[ **उदाहरण के अनुसार सन्धि या सन्धि विच्छेद करें।** Join or dis-join as shown in the examples. ]

**(क) यथा**– (i) श्रीमाञ्छत्रुनिबर्हणः = **श्रीमान्** + **शत्रुनिबर्हणः**

(ii) ताञ्छास्त्राणि = ........तान्........ +

(iii) एताञ्छिष्यान् = +

(iv) विद्यावाञ्छक्तिमान् = +

(v) लक्ष्मीवाञ्छुभलक्षणः = +

| | | | | | |
|---|---|---|---|---|---|
| (vi) | अस्माञ्छ्रावय | = | | + | |
| (vii) | ताञ्छक्तिमतः | = | | + | |
| (viii) | | = | पाठान् | + | श्रुत्वा |
| (ix) | | = | युष्मान् | + | शास्त्रनिपुणान् |
| (x) | | = | बालकान् | + | शिष्यान् |

**(ख)** **यथा–**

| | | | | | |
|---|---|---|---|---|---|
| (i) | **गूढजत्रुः** | **+** | **अरिन्दमः** | **=** | **गूढजत्रुररिन्दमः** |
| (ii) | शत्रुः | + | अयम् | = | |
| (iii) | | + | | = | भानुरुदेति |
| (iv) | गुरुः | + | आगच्छति | = | |
| (v) | हरिः | + | इव | = | |
| (vi) | | + | | = | भक्तिरियम् |
| (vii) | शक्तिः | + | अस्तु | = | |
| (viii) | | + | | = | कपिरेति |
| (ix) | पितुः | + | आदेशः | = | |
| (x) | | + | | = | बालकयोरेतयोः |

4. **रिक्तस्थाने यथोचितं समस्तं पदं विग्रहवाक्यं वा पूरयत समासनिर्देशं च कुरुत–**
[ **उचित समस्तपद या विग्रहवाक्य से रिक्तस्थान की पूर्ति करें तथा समास निर्देश करें।** Fill in the blanks with either compound word or analytical sentence and write the compound name. ]

| | | समस्तं पदम् | विग्रह-वाक्यम् | समास-प्रकारः |
|---|---|---|---|---|
| **यथा–** | (i) | **महाहनुः** | **महान् हनुः यस्य** | **बहुव्रीहिः** |
| | (ii) | | स्निग्धः वर्णः यस्य | |
| | (iii) | | पीनं वक्षः यस्य | |
| | (iv) | महेष्वासः | | बहुव्रीहिः |
| | (v) | | विशाले अक्षिणी यस्य | |
| | (vi) | शुभलक्षणः | | |
| | (vii) | | समानि विभक्तानि अङ्गानि यस्य | |

(viii) नियतात्मा

(ix) महद् वीर्यं यस्य

(x) विपुलांसः

5. **यथोदाहरणं रिक्तस्थानं पूरयत-**

**[ उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as shown in the example. **]**

**(क) यथा–** (i) शोभनं शिरः यस्य ..........**सुशिराः**.....

(ii) शोभनं मनः यस्य ..............................

(iii) शोभनं यशः यस्य ..............................

(iv) शोभनं तेजः यस्य

(v) शोभनं वचः यस्य ..............................

(vi) दृढं वक्षः यस्य

| | | | | | | |
|---|---|---|---|---|---|---|
| **(ख) यथा–** | (i) | **महत्** | **तेजः** | **यस्य** | | महातेजाः |
| | (ii) | | | | | महायशः |
| | (iii) | | | | | महामनाः |

6. **उदाहरणानुगुणं रिक्तस्थानं पूरयत-**

**[ उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as shown in the example. **]**

| | | | | |
|---|---|---|---|---|
| **यथा–** | (i) | द्युतिः अस्य अस्मिन् वा अस्ति | = | ..........**द्युतिमान्**... |
| | (ii) | धृतिः अस्य अस्मिन् वा अस्ति | = | |
| | (iii) | मतिः अस्य अस्मिन् वा अस्ति | = | |
| | (iv) | बुद्धिः अस्य अस्ति | = | |
| | (v) | नीतिः अस्य अस्ति | = | |
| | (vi) | | = | वाग्मी |
| | (vii) | | = | वशी |
| | (viii) | | = | श्रीमान् |
| | (ix) | | = | धीमान् |
| | (x) | | = | शक्तिमान् |

7. **पदानि उचितेन विश्लेषणेन योजयत-**

[ **पदों को उचित विवरण से जोड़ें।** Match the words with appropriate analysis. ]

| | | | | |
|---|---|---|---|---|
| यथा– | (i) | नियतात्मा | (क) | अ० पुं० प्र० एक० समस्तम् |
| | (ii) | सुशिराः | (ख) | तृ० पुं० प्र० एक० |
| | (iii) | महाबाहुः | (ग) | अ० पुं० प्र० एक० |
| | (iv) | प्रतापवान् | (घ) | स्० पुं० प्र० एक० समस्तम् |
| | (v) | महोरस्कः | (ङ) | न्० पुं० प्र० एक० समस्तम् |
| | (vi) | श्रुतः | (च) | उ० पुं० प्र० एक० समस्तम् |
| | (vii) | गूढजत्रुः | (छ) | अ० पुं० तृ० बहु० |
| | (viii) | वाग्मी | (ज) | प्रसिद्धार्थकम् अव्ययम् |
| | (ix) | नाम | (झ) | न्० पुं० प्र० एक० |
| | (x) | जनैः | (ञ) | उ० पुं० प्र० एक० समस्तम् |

8. **श्लोकानुसारं समासघटकं पदं यथोचितं योजयित्वा समस्तं पदं लिखत-**

[ **श्लोक के अनुसार समास-घटक पदों को जोड़कर उचित समस्त-पद लिखें।** Match the constituents of the compounds as per the verse and write the appropriate compound form. ]

| | | | | | |
|---|---|---|---|---|---|
| यथा– | (i) | स्निग्ध | ग्रीवः | (i) | **स्निग्धवर्णः** |
| | (ii) | महा | वक्षाः | (ii) | |
| | (iii) | पीन | बाहुः | (iii) | |
| | (iv) | कम्बु | वर्णः | (iv) | |
| | (v) | इक्ष्वाकुवंश | लक्षणः | (v) | |
| | (vi) | सु | निबर्हणः | (vi) | |
| | (vii) | शुभ | प्रभवः | (vii) | |
| | (viii) | शत्रु | शिराः | (viii) | |
| | (ix) | गूढ | बाहुः | (ix) | |
| | (x) | आजानु | जत्रुः | (x) | |

**श्लोकः**

धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान् ॥ 12 ॥

प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ 13 ॥

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ 14 ॥

सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ 15 ॥

**पदच्छेदः**

धर्मज्ञः सत्य-सन्धः च प्रजानाम् च हिते रतः।
यशस्वी ज्ञान-सम्पन्नः शुचिः वश्यः समाधिमान् ॥ 12 ॥
प्रजा-पति-समः श्रीमान् धाता रिपु-निषूदनः।
रक्षिता जीव-लोकस्य धर्मस्य परि-रक्षिता ॥ 13 ॥
रक्षिता स्वस्य धर्मस्य स्व-जनस्य च रक्षिता।
वेद-वेदाङ्ग–तत्त्व-ज्ञः धनुः-वेदे च नि-ष्ठितः ॥ 14 ॥
सर्व-शास्त्रार्थ-तत्त्व-ज्ञः स्मृतिमान् प्रतिभानवान्।
सर्व-लोक-प्रियः साधुः अदीनात्मा वि-चक्षणः ॥ 15 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| धर्मज्ञः | अ० पुं० प्र० एक० समस्तम् | यशस्वी | न्० पुं० प्र० एक० |
| सत्यसन्धः | अ० पुं० प्र० एक० समस्तम् | ज्ञानसम्पन्नः | अ० पुं० प्र० एक० समस्तम् |
| प्रजानाम् | आ० स्त्री० ष० बहु० | शुचिः | इ० पुं० प्र० एक० |
| हिते | अ० नपुं० स० एक० | वश्यः | अ० पुं० प्र० एक० |
| रतः | अ० पुं० प्र० एक० | समाधिमान् | त्० पुं० प्र० एक० |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| प्रजापतिसमः | अ० पुं० प्र० एक० समस्तम् | स्वजनस्य | अ० पुं० ष० एक० |
| श्रीमान् | त्० पुं० प्र० एक० | वेदवेदाङ्गतत्त्वज्ञः | अ० पुं० प्र० एक० समस्तम् |
| धाता | ऋ० पुं० प्र० एक० | धनुर्वेदे | अ० पुं० स० एक० समस्तम् |
| रिपुनिषूदनः | अ० पुं० प्र० एक० समस्तम् | निष्ठितः | अ० पुं० प्र० एक० |
| रक्षिता | ऋ० पुं० प्र० एक० | सर्वशास्त्रार्थतत्त्वज्ञः | अ० पुं० प्र० एक० समस्तम् |
| जीवलोकस्य | अ० पुं० ष० एक० समस्तम् | स्मृतिमान् | त्० पुं० प्र० एक० |
| धर्मस्य | अ० पुं० ष० एक० | प्रतिभानवान् | त्० पुं० प्र० एक० |
| परिरक्षिता | परिरक्षितृ - ऋ० पुं० प्र० एक० समस्तम् | सर्वलोकप्रियः | अ० पुं० प्र० एक० समस्तम् |
| | | साधुः | उ० पुं० प्र० एक० |
| स्वस्य | स्व- अ० सर्व० पुं० ष० एक० | अदीनात्मा | न्० पुं० प्र० एक० समस्तम् |
| | | विचक्षणः | अ० पुं० प्र० एक० |

**आकाङ्क्षा**

| | |
|---|---|
| स च रामः पुनः कीदृशः अस्ति? | धर्मज्ञः सत्यसन्धः प्रजानां च हिते रतः यशस्वी ज्ञानसम्पन्नः शुचिः वश्यः समाधिमान् च अस्ति। |
| पुनः कीदृशः अस्ति ? | प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः जीवलोकस्य रक्षिता धर्मस्य च परिरक्षिता अस्ति। |
| पुनः कीदृशः अस्ति ? | स्वस्य धर्मस्य स्वजनस्य च रक्षिता वेदवेदाङ्गतत्त्वज्ञः धनुर्वेदे च निष्ठितः अस्ति। |
| पुनः कीदृशः अस्ति ? | सर्वशास्त्रार्थ-तत्त्वज्ञः स्मृतिमान् प्रतिभानवान् सर्वलोकप्रियः साधुः अदीनात्मा विचक्षणः च अस्ति। |

**अन्वयः**

(स च रामः) धर्मज्ञः सत्यसन्धः प्रजानां हिते च रतः यशस्वी ज्ञानसम्पन्नः शुचिः वश्यः समाधिमान् च (अस्ति) ॥ 12 ॥ (स च रामः) प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः जीवलोकस्य रक्षिता धर्मस्य (च) परिरक्षिता (अस्ति) ॥ 13 ॥ (स च रामः) स्वस्य धर्मस्य स्वजनस्य च रक्षिता वेदवेदाङ्गतत्त्वज्ञः धनुर्वेदे च निष्ठितः (अस्ति) ॥ 14 ॥ (स च रामः) सर्वशास्त्रार्थ-तत्त्वज्ञः स्मृतिमान् प्रतिभानवान् सर्वलोकप्रियः साधुः अदीनात्मा विचक्षणः (च अस्ति) ॥ 15 ॥

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| धर्मज्ञः | धर्मतत्त्वज्ञः | धर्म के ज्ञाता | One who knows the secret of virtues |
| सत्यसन्धः | सत्यप्रतिज्ञः | सत्यनिष्ठ | true to his promise |
| प्रजानां च | जनानां च | और जनता के | of the people |
| हिते | कल्याणे | कल्याण में | in the benefit |
| रतः | प्रवृत्तः | लगे रहने वाले | intent |
| यशस्वी | यशस्वी | यशस्वी | illustrious |
| ज्ञानसम्पन्नः | ज्ञानवान् | ज्ञानवान् | full of wisdom |
| शुचिः | पूतः | पवित्र आचरण वाले | pure in his dealing |
| वश्यः | जितेन्द्रियः | जितेन्द्रिय | self controlled |
| समाधिमान् | समाधिस्थः | योगी | having concen-trated mind |
| प्रजापतिसमः | विधातृतुल्यः | ब्रह्मा के समान | like the creator Brahmā |
| श्रीमान् | श्रीसम्पन्नः | दिव्य विभूति वाले | affluent |
| धाता | प्रजानां धारकः | लोक के व्यवस्थापक | supporter of the Creation |
| रिपुनिषूदनः | शत्रुहन्ता | शत्रुओं के विनाशक | slayer of his enemies |
| जीवलोकस्य | प्राणिलोकस्य | संसार के | of living beings |
| रक्षिता | रक्षकः | रक्षक | protector |
| धर्मस्य | धर्मस्य | धर्म की | of faith |
| परिरक्षिता | रक्षकः | रक्षा करने वाले | staunch defender |
| स्वस्य | आत्मनः | अपने | of own |
| स्वजनस्य | आत्मीयस्य | अपने लोगों के | of own people |
| रक्षिता | संरक्षकः | रक्षक | vindicator |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| वेद-वेदाङ्ग-तत्त्वज्ञः | वेदानां[1] वेदाङ्गानां[2] च रहस्य-ज्ञाता | वेदों एवं वेदाङ्गों के रहस्य को जानने वाले | knower of the truth of *Vedās* and *Vedāṅgās* |
| धनुर्वेदे | धनुर्विद्यायाम् | धनुर्वेद में | in archery |
| निष्ठितः | पारङ्गतः | पारङ्गत | past master |
| सर्वशास्त्रार्थतत्त्वज्ञः | शास्त्राणां मर्मज्ञः | शास्त्रों के मर्मज्ञ | knower of the real meaning of the scriptures |
| स्मृतिमान् | दृढस्मृतिः | दृढ़ स्मृति वाले | possessed of sharp memory |
| प्रतिभानवान् | अलौकिकबुद्धिसम्पन्नः | विलक्षणबुद्धिसम्पन्न | possessed of quick wit |
| सर्वलोकप्रियः | सर्वजनप्रियः | सभी के प्रिय | popular amongst the people |
| साधुः | सज्जनः | सज्जन | pious |
| अदीनात्मा | अदीनस्वभावः | अदीन स्वभाव वाले | high minded one |
| विचक्षणः | विवेकसम्पन्नः | विवेकयुक्त | clever |

**भावार्थः**

**संस्कृतम्**– रामो न केवलं रूपवान् किन्तु गुणवान् अपि अस्ति। सः धर्मं जानाति सत्यम् आश्रित्य व्यवहरति। सः प्रजापालनपरः तिष्ठति यशः वितनुते। सः ज्ञानवान् अस्ति। तदीयं चरितं पावनम् अस्ति। सः विनयं परिपालयति योगपरः च तिष्ठति ॥ 12 ॥ रामः मानुषत्वेऽपि ब्रह्मसमानः अस्ति। सः मर्त्यजीवनेऽपि सनातन-विभूतिसम्पन्नः अस्ति। सः धर्मव्यवस्थायाः सर्वथा परिपालकः अस्ति। तस्माद् एकतः तु जीवलोकं रक्षति तदर्थमेव च अपरतः शत्रुसमूहं विनाशयति ॥ 13 ॥ रामः स्वकीयं धर्मं रक्षितुं जानाति। अत एव स्व-जनान् रक्षितुमपि पारयति। सः वेद-वेदाङ्गानां तत्त्व-ज्ञानेन सहैव धनुर्वेदेऽपि निष्ठावानस्ति ॥ 14 ॥ रामः प्रतिभासम्पन्नः अस्ति। अत एव सर्वशास्त्रार्थ-तत्त्वज्ञः स्मृतिमान् च अस्ति। सः विचक्षणः अर्थात् कर्त्तव्याकर्त्तव्य-विवेकसम्पन्नः अस्ति। अत एव सर्वलोक-प्रियः साधु-चरितः अदीनात्मा च अस्ति ॥ 15 ॥

1. *ऋग्-यजु-साम-अर्थव-वेदाः*
2. *शिक्षा-कल्प-निरुक्त-व्याकरण-छन्दः-ज्योतिष-वेदाङ्गानि*

**हिन्दी**– राम धर्म के ज्ञाता, सत्य प्रतिज्ञा वाले, प्रजा के कल्याण में निरन्तर संलग्न, यशस्वी, ज्ञानवान् पवित्र आचरण युक्त, विनय युक्त तथा योगी हैं ॥ 12 ॥ वे ब्रह्मा के सदृश हैं, श्री से युक्त, प्रजा के धारक, शत्रुनाशक, जीवलोक के रक्षक एवं धर्म के सर्वथा संरक्षक हैं। ॥ 13 ॥ स्वधर्म के परिपालक, स्वजनों के रक्षक, वेदों तथा वेदाङ्गों के मर्म को जानने वाले एवं धनुर्वेद में भी निष्ठावान् हैं ॥ 14 ॥ सभी शास्त्रों के रहस्य के ज्ञाता, सुदृढ़ स्मृति वाले, प्रतिभा सम्पन्न, सभी के प्रिय, सज्जन, आत्मबलयुक्त एवं विवेकसम्पन्न हैं ॥ 15 ॥

**आंग्लम्**– He knows the secret of virtue, and is true to his promise and intent on the good of the people. He is illustrious, full of wisdom, pure in his dealings, a man of self-control and concentrated mind. (12) He is a supporter of the creation like Brahmā (the lord of created beings), affluent, the slayer of his enemies, a protector of living beings and a staunch defender of faith. (13) He is a vindicator of his own virtue and the protector of his own people. He knows the truth of the *Vedas* and the (six) sciences (grammar etc.) auxiliary to them and is a past master in archery. (14) He knows the real meaning of all the scriptures, is possessed of a sharp memory and quick wit. He is popular in all the worlds, pious, high-minded and shrewd. (15)

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| शुचिर्वश्यः | = | शुचिः + वश्यः (विसर्ग-सन्धिः) |
| धनुर्वेदे | = | धनुः + वेदे (विसर्ग-सन्धिः) |
| साधुरदीनात्मा | = | साधुः + अदीनात्मा (विसर्ग-सन्धिः) |
| अदीनात्मा | = | अदीन + आत्मा (दीर्घ-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| सत्यसन्धः | – | सत्या सन्धा यस्य सः (बहुव्रीहिः) {सन्धा = प्रतिज्ञा} |
| ज्ञानसम्पन्नः | – | ज्ञानेन सम्पन्नः (तृ० तत्पु०) |
| जीवलोकस्य | – | जीवानां लोकः जीवलोकः (ष० तत्पु०) तस्य |
| स्वजनस्य | – | स्वस्य जनः स्वजनः (ष० तत्पु०) तस्य {स्व = आत्मा} |
| वेदवेदाङ्गतत्त्वज्ञः | – | वेदाश्च वेदाङ्गानि च वेदवेदाङ्गानि (द्वन्द्वः); वेद-वेदाङ्गानां तत्त्वं वेदवेदाङ्गतत्त्वं (ष० तत्पु०); वेदवेदाङ्गतत्त्वं जानातीति वेदवेदाङ्गतत्त्वज्ञः (उपपद-तत्पु०) |

सर्वलोकप्रियः – सर्वे च ते लोकाः सर्वलोकाः (कर्मधारयः); सर्वलोकानां प्रियः सर्वलोकप्रियः (ष० तत्पु०)

अदीनात्मा – न दीनः अदीनः (नञ्-तत्पु०); अदीनः आत्मा यस्य सः अदीनात्मा (बहुव्रीहिः)

(ग) **कृदन्ताः**

हितम् – हि (धा) + क्त

रतः – रम् + क्त

सम्पन्नः – सम् + पद् + क्त

धाता (धातृ) – धा + तृच्

रक्षिता (रक्षितृ) – रक्ष् + तृच्

निष्ठितः – नि + स्था + क्त

विचक्षणः – वि + चक्ष् + ल्यु (अन)

निषूदनः – नि + सूद् + ल्यु (अन)

वश्यः – वश् + यत्

शुचिः – शुच् + इन्

सन्धा – सम् + धा + अङ् + टाप्

प्रियः – प्री + क (अ)

शास्त्रम् – शास् + ष्ट्रन्

प्रजाः – प्र + जन् + ड + टाप्

ज्ञानम् – ज्ञा + ल्युट् (अन)

(घ) **तद्धितान्ताः**

यशस्वी – यशः अस्ति अस्य (यशस् + विनि)

समाधिमान् – समाधिः अस्मिन् अस्ति (समाधि + मतुप्)

श्रीमान् – श्रीः अस्य अस्ति (श्री + मतुप्)

स्मृतिमान् – प्रशस्ता स्मृतिः अस्य अस्ति (स्मृति + मतुप्)

(ii) **कोशः**

सन्धा – प्रतिज्ञानेऽवधौ सन्धा (वैजयन्तीकोशः)

साधु – साधुस्त्रिषूचिते सौम्ये सज्जने वार्धुषावपि (वैजयन्तीकोशः)

**अवधेयम्**

**कृत्-प्रत्ययविषये**

## अभ्यासः – 7
### (श्लोकः 12-15)

**1. रिक्तं स्थानं यथोचितं पूरयत–**

[ **श्लोकों के आधार पर उचित पदों से रिक्त स्थान भरें।** Fill in the blanks with the appropriate words from of the verses. ]

(i) .................... प्रजानाम् च हिते रतः ।
यशस्वी ज्ञानसम्पन्नः .................... ॥

(ii) प्रजापतिसमः श्रीमान् .................... ।
रक्षिता .................... धर्मस्य .................... ॥

(iii) रक्षिता .................... ।
.................... धनुर्वेदे .................... निष्ठितः ॥

(iv) सर्वशास्त्रार्थतत्त्वज्ञः .................... प्रतिभानवान् ।
.................... साधुरदीनात्मा .................... ॥

**2. यथोचितं योजयत–**

[ **सही मेल बनाएं।** Match with the appropriate ones.]

| | | | |
|---|---|---|---|
| **यथा–** (i) | धर्मं जानाति | (क) | सत्यसन्धः |
| (ii) | प्रतिभानम् अस्ति अस्य | (ख) | सर्वलोकप्रियः |
| (iii) | सत्या सन्धा अस्य | (ग) | ज्ञानसम्पन्नः |
| (iv) | सर्वलोकानां प्रियः | (घ) | प्रतिभानवान् |
| (v) | ज्ञानेन सम्पन्नः | (ङ) | धर्मज्ञः |
| (vi) | श्रीः अस्मिन् / अस्य वा अस्ति | (च) | अदीनात्मा |
| (vii) | न दीनः आत्मा यस्य | (ज) | श्रीमान् |
| (viii) | यशः अस्ति अस्य | (झ) | यशस्वी |

**3. यथाश्लोकं योजयत-**

**[श्लोकों के अनुसार मेल करें।** Match on the basis of the verses.]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | धर्मस्य | (क) | हिते रतः |
| (ii) | रिपूणां | (ख) | निषूदनः |
| (iii) | प्रजानां च | (ग) | परिरक्षिता |
| (iv) | धनुर्वेदे च | (घ) | जीवलोकस्य |
| (v) | रक्षिता | (ङ) | निष्ठितः |

**4. यथोचितं योजयत-**

**[सही मेल बनाएं।** Match with the appropriate word-analysis.]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | यशस्वी | (क) | त्० पुं० प्र० एक० |
| (ii) | रक्षिता | (ख) | न्० पुं० प्र० एक० समस्तम् |
| (iii) | अदीनात्मा | (ग) | ऋ० पुं० प्र० एक० |
| (iv) | श्रीमान् | (घ) | आ० स्त्री० ष० बहु० |
| (v) | प्रजानाम् | (ङ) | न्० पुं० प्र० एक० |

**5. यथोदाहरणं रिक्तं स्थानं पूरयत-**

**[उदाहरण के अनुसार रिक्तस्थान की पूर्ति करें।** Fill in the blanks as shown in the example.]

**यथा–** (क) ज्ञानसम्पन्नः – **ज्ञानेन सम्पन्नः**

साधनसम्पन्नः –

आचारसम्पन्नः –

शीलसम्पन्नः –

विनयसम्पन्नः –

विद्यासम्पन्नः –

सर्वगुणसम्पन्नः –

**यथा–** (ख) यशस्वी – **यशः अस्य अस्ति**

तेजस्वी –

ओजस्वी –

मनस्वी –

**6. यथोदाहरणं रिक्तं स्थानं पूरयत-**

[**उदाहरण के अनुसार रिक्तस्थानों की पूर्ति करें।** Fill in the blanks as shown in the example.]

| | | |
|---|---|---|
| यथा– (i) | रामः जीवलोकं रक्षति। | **रामः जीवलोकस्य रक्षिता।** |
| (ii) | हरिः लोकं बिभर्ति। | भर्त्ता। |
| (iii) | सज्जनः सर्वान् उपकरोति। | उपकर्त्ता। |
| (iv) | शिवः संसारं संहरति। | संहर्त्ता। |
| (v) | अध्यापकः शिष्यान् पाठयति। | अध्यापकः शिष्याणां । |
| (vi) | जनकः पुत्रीं शिक्षयति। | जनकः पुत्र्याः । |
| (vii) | गान्धी लोकं नयति। | गान्धी लोकस्य । |
| (viii) | गुरुः दुःखं शमयति। | गुरुः दुःखस्य । |

**7. यथोदाहरणं रिक्तं स्थानं पूरयत-**

[**उदाहरण के अनुसार रिक्तस्थानों की पूर्ति करें।** Fill in the blanks as shown in the example.]

| | | | |
|---|---|---|---|
| यथा– (i) | **स्मृतिमान्** | – | (प्रशस्ता) स्मृतिः अस्य अस्ति। |
| (ii) | | – | (प्रशस्ता) बुद्धिः अस्य अस्ति। |
| (iii) | नीतिमान् | – | (   ) । |
| (iv) | | – | धृतिः अस्य अस्ति। |
| (v) | शक्तिमान् | – | । |

**8. अर्थं बुद्ध्वा यथोचितं योजयत-**

[**अर्थ समझ कर सही मेल करें।** Match with the appropriate after understanding the meaning.]

| | | | |
|---|---|---|---|
| यथा– (i) | धर्मज्ञः | (क) | पवित्रः |
| (ii) | हिते | (ख) | संलग्नः |
| (iii) | रतः | (ग) | सज्जनः |
| (iv) | शुचिः | (घ) | कल्याणे |
| (v) | शास्त्राणि | (ङ) | धर्मतत्त्ववेत्ता |
| (vi) | साधुः | (च) | मीमांसा-न्याय-वेदान्त-सांख्य-योगादीनि |
| (vii) | वेदाङ्गानि | (छ) | ऋग्-यजुः-साम-अथर्वाख्याः |
| (viii) | वेदाः | (ज) | शिक्षा-कल्प-निरुक्त-छन्दः-व्याकरण-ज्योतिष-शास्त्राणि |

**श्लोकः**

सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ॥ 16 ॥

स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ 17 ॥

विष्णुना सदृशो वीर्ये सोमवत् प्रियदर्शनः ।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ 18 ॥

धनदेन समस्त्यागे सत्ये धर्म इवापरः ।
................................................................................ ॥ 19 ॥

**पदच्छेदः**

सर्वदा अभिगतः सद्भिः समुद्रः इव सिन्धुभिः ।
आर्यः सर्व-समः च एव सदा एव प्रिय-दर्शनः ॥ 16 ॥

सः च सर्व-गुणोपेतः कौसल्यानन्द-वर्धनः ।
समुद्रः इव गाम्भीर्ये धैर्येण हिमवान् इव ॥ 17 ॥

विष्णुना सदृशः वीर्ये सोमवत् प्रिय-दर्शनः ।
कालाग्नि-सदृशः क्रोधे क्षमया पृथिवी-समः ॥ 18 ॥

धनदेन समः त्यागे सत्ये धर्मः इव अपरः ।
॥ 19 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सर्वदा | तद्धितान्तम् अव्ययम् | समुद्रः | अ० पुं० प्र० एक० |
| अभिगतः | अ० पुं० प्र० एक० | इव | अव्ययम् |
| सद्भिः | त्० पुं० तृ० बहु० | सिन्धुभिः | उ० स्त्री० तृ० बहु० |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| आर्यः | अ० पुं० प्र० एक० | सोमवत् | तद्धितान्तम् अव्ययम् |
| सर्वसमः | अ० पुं० प्र० एक० समस्तम् | कालाग्निसदृशः | अ० पुं० प्र० एक० समस्तम् |
| प्रियदर्शनः | अ० पुं० प्र० एक० समस्तम् | क्रोधे | अ० पुं० स० एक० |
| सर्वगुणोपेतः | अ० पुं० प्र० एक० समस्तम् | क्षमया | आ० स्त्री० तृ० एक० |
| कौसल्यानन्दवर्धनः | अ० पुं० प्र० एक० समस्तम् | पृथिवीसमः | अ० पुं० प्र० एक० समस्तम् |
| गाम्भीर्ये | अ० नपुं० स० एक० | धनदेन | अ० पुं० तृ० एक० |
| धैर्येण | अ० नपुं० तृ० एक० | समः | अ० पुं० प्र० एक० |
| हिमवान् | तृ० पुं० प्र० एक० | त्यागे | अ० पुं० स० एक० |
| विष्णुना | उ० पुं० तृ० एक० | सत्ये | अ० नपुं० स० एक० |
| सदृशः | अ० पुं० प्र० एक० | धर्मः | अ० पुं० प्र० एक० |
| वीर्ये | अ० नपुं० स० एक० | अपरः | अ० पुं० प्र० एक० |

### आकाङ्क्षा

**पूर्वोक्त-विशेषणविशिष्टः रामः पुनरपि अनेकगुणसम्पन्नः। अतः आह- सः रामः अभिगतः।**

| | |
|---|---|
| कैः अभिगतः ? | सद्भिः अभिगतः। |
| कदा अभिगतः ? | सर्वदा अभिगतः। |
| क इव अभिगतः ? | सिन्धुभिः समुद्र इव अभिगतः। |
| पुनः सः कीदृशः ? | आर्यः सर्वसमः सदैव प्रियदर्शनः च (अस्ति)। |
| पुनः कीदृशः ? | सः कौसल्यानन्दवर्धनः सर्वगुणोपेतः च (अस्ति)। |
| रामः गाम्भीर्ये कीदृशः ? | (रामः) गाम्भीर्ये समुद्र इव। |
| धैर्येण कः इव ? | धैर्येण हिमवान् इव। |
| वीर्ये केन सदृशः ? | वीर्ये विष्णुना सदृशः। |
| कः इव प्रियदर्शनः ? | सोमवत् प्रियदर्शनः। |
| क्रोधे कीदृशः ? | क्रोधे कालाग्निसदृशः। |
| क्षमया किंसमः ? | क्षमया पृथिवीसमः। |
| त्यागे केन समः ? | त्यागे धनदेन समः। |
| सत्ये कः इव ? | सत्ये अपरः धर्मः इव (अस्ति)। |

**अन्वयः**

(रामः) सर्वदा सद्भिः समुद्रः इव अभिगतः (भवति)। (सः) आर्यः सर्वसमः सदा एव प्रियदर्शनः च (अस्ति)। सर्वगुणोपेतः सः कौसल्यानन्दवर्धनः च (अपि अस्ति)। गाम्भीर्ये (सः) समुद्रः इव, धैर्येण हिमवान् इव, वीर्ये विष्णुना सदृशः सोमवत् प्रियदर्शनः ( च अस्ति)। क्रोधे कालाग्निसदृशः, क्षमया पृथिवीसमः, त्यागे धनदेन समः सत्ये अपरः धर्मः इव (च अस्ति)।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सिन्धुभिः | नदीभिः | नदियों से | by rivers |
| समुद्रः | सागरः | समुद्र (की) | ocean |
| इव | सदृशः | तरह | just as |
| सर्वदा | सततम् | हमेशा | always |
| सद्भिः | सज्जनैः | सज्जनों से | by righteous |
| अभिगतः | संगतः | घिरा हुआ | persons sought |
| आर्यः | पूज्यः | पूज्य | noble |
| सर्वसमः | सर्वेषु तुल्यः (समानः) | सभी में समान | alike to all |
| सदैव | सर्वदा एव | हमेशा ही | always |
| प्रियदर्शनः | प्रियरूपः | प्रिय दिखाई देने वाला | having pleasing countenance |
| सः | पूर्वोक्तः | वह | he |
| सर्वगुणोपेतः | सर्वैः गुणैः युक्तः | सब गुणों से युक्त | endowd with all excellences |
| कौसल्यानन्दवर्धनः | कौसल्यामातुः आनन्दस्य वर्धनः | कौसल्या के आनन्द को बढ़ाने वाला | enhances the delight of Kausalyā |
| गाम्भीर्ये | गभीरतायाम् | गहराई में | in profoundity |
| समुद्रः इव | सागर-सदृशः | समुद्र की तरह | like ocean |
| धैर्येण | धृत्या | धैर्य से | in firmness |
| हिमवान् | हिमालयः | हिमालय | Himālaya |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| इव | इव | तरह | like |
| वीर्ये | पराक्रमे | पराक्रम में | in prowess |
| विष्णुना | नारायणेन | विष्णु के | Viṣṇu |
| सदृशः | तुल्यः | समान | like |
| सोमवत् | चन्द्रवत् | चन्द्र की तरह | like the moon |
| प्रियदर्शनः | प्रियरूपः | प्रिय दिखाई देनेवाले | possessed of pleasing appearance |
| क्रोधे | कोपे | क्रोध में | in anger |
| कालाग्निसदृशः | प्रलयाग्निसमः | प्रलय काल की अग्नि के समान | resembling the destructive fire |
| क्षमया | क्षमाधर्मेण | क्षमा में | in forbearance |
| पृथिवीसमः | धरित्रीतुल्यः | पृथिवी के समान | counterpart of earth |
| त्यागे | दाने | दान में | in liberality |
| धनदेन | कुबेरेण | कुबेर के | with Kubera (the god of wealth) |
| समः | तुल्यः | समान | just like |
| सत्ये | सत्यवचने | सत्य में | in truthfulness |
| अपरः | अन्यः | दूसरा | another |
| धर्मः | धर्मदेवः | धर्मदेव | the god of piety |

**भावार्थः**

**संस्कृतम्**— यथा समुद्रः सर्वदा नदीभिः अभिगतः तथैव रामः सर्वदा सत्पुरुषैः परिवारितः तिष्ठति। सः सर्वसुलभः सर्वेषु च तुल्यं व्यवहरति। सः सर्वावस्थासु प्रियदर्शनः एव अस्ति ॥ 16 ॥ सः रामः सर्वैः श्रेष्ठ-पुरुषोचितैः गुणैः संयुक्तः, कौसल्यायाः मातुः आनन्दवर्धनः, समुद्र इव गम्भीरः हिमालयवत् धैर्यशाली च वर्त्तते ॥ 17 ॥ सः रामः पराक्रमे विष्णुसदृशः चन्द्रवत् प्रियः च दृश्यते, क्रोधे प्रलयाग्निसदृशः तथा च क्षमारूपे धर्मे पृथिवीतुल्यः वर्तते ॥ 18 ॥ सः रामः दानकर्मणि कुबेरेण तुल्यः सत्यवचने च द्वितीया धर्मदेवता अस्ति ॥ 19 ॥

**हिन्दी**– जैसे समुद्र सदा नदियों से घिरा हुआ रहता है, उसी तरह राम सज्जनों से सदा मिलते हैं। वे सर्वसुलभ हैं, सभी के प्रति समान व्यवहार करते हैं और सभी अवस्थाओं में प्रिय दिखाई देते हैं॥ 16 ॥ राम सब गुणों से सम्पन्न हैं, माता कौसल्या के आनन्द को बढ़ाने वाले हैं, समुद्र के समान गम्भीर तथा हिमालय के समान धैर्यशाली हैं॥ 17 ॥ वे शक्ति में विष्णु के समान हैं तथा चन्द्रमा की तरह प्रिय दिखाई देते हैं। वे क्रोध में प्रलयकाल के अग्नि के समान तथा क्षमा में पृथिवी की तरह हैं॥ 18 ॥ वे दान करने में कुबेर के समान तथा सत्यभाषण में दूसरे साक्षात् धर्म हैं॥ 19 ॥

**आंग्लम्**– He is always sought by the righteous (even) as the ocean is by rivers. He is noble, alike to all and always wears a pleasing countenance. (16) He is endowed with all excellences and enhances the delight of (his mother) Kausalyā. He vies with the ocean in profundity and compares with the Himālaya in point of firmness. (17) He is a replica of Lord Viṣṇu in prowess and is pleasing of aspect as the moon. In anger he resembles the destructive fire at the end of creation and is a counterpart of mother earth in forbearance. (18) He equals Kubera (the god of wealth) in liberality and is another Dharma (the god of piety) as it were in point of truthfulness. (19)

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

सर्वदाभिगतः – सर्वदा + अभिगतः (दीर्घ-सन्धिः)

कौसल्यानन्दवर्धनः – कौसल्या + आनन्दवर्धनः (दीर्घ-सन्धिः)

कालाग्निसदृशः – काल + अग्नि-सदृशः (दीर्घ-सन्धिः)

सदैव – सदा + एव (वृद्धि-सन्धिः)

**(ख) श्लोकेषु सादृश्यार्थकशब्दानां प्रयोगाः**

1. इव 2. सदृशः 3. वत् 4. समः

**1. इव** (i) सिन्धुभिः समुद्रः इव सद्भिः सर्वदा अभिगतः (रामः)

(ii) गाम्भीर्ये समुद्रः इव (रामः)

(iii) धैर्येण हिमवान् इव (रामः)

(iv) सत्ये अपरः धर्मः इव (रामः)

**2. सदृशः** (i) वीर्ये विष्णुना सदृशः (रामः)

| | | |
|---|---|---|
| | (ii) | क्रोधे कालाग्निसदृशः (रामः) |
| **3. ...... + वत्** | (i) | सोमवत् प्रियदर्शनः (रामः) |
| **4. समः** | (i) | क्षमया पृथिवीसमः (रामः) |
| | (ii) | त्यागे धनदेन समः (रामः) |

**(ग) समासः**

| | | |
|---|---|---|
| सर्वसमः | – | सर्वेषु समः (स० तत्पु०) |
| कालाग्निसदृशः | – | कालाग्निना सदृशः (तृ० तत्पु०) |
| पृथिवीसमः | – | पृथिव्या समः (तृ० तत्पु०) |
| प्रियदर्शनः | – | प्रियं दर्शनं यस्य सः (बहुव्रीहिः) |
| आनन्दवर्धनः | – | आनन्दस्य वर्धनः (ष० तत्पु०) |

**(घ) कृदन्ताः**

| | | |
|---|---|---|
| अभिगतः | – | अभि + गम् + क्त |
| दर्शनम् | – | दृश् + ल्युट् (अन) |
| वर्धनः | – | वृध् + ल्यु (अन) |
| त्यागः | – | त्यज् + घञ् |

**(ङ) तद्धितान्तौ**

| | | |
|---|---|---|
| गाम्भीर्यम् | – | गम्भीर + ष्यञ् (गम्भीरस्य भावः) |
| हिमवान् | – | हिम + मतुप् (हिमम् अस्मिन् अस्ति) |

(ii) **कोशः**

**(क) सिन्धुः**

| | | |
|---|---|---|
| नदी | – | सिन्धुर्ना सरिति स्त्रियाम् (कोशः) |
| | | स्त्री नद्यां ना नदे सिन्धुर्देशभेदेऽम्बुधौ गजे (वैजयन्ती-कोशः) |

**(ख) वीर्यम्**

| | | |
|---|---|---|
| शक्तिः | – | वीर्यं शुक्रे च शक्तौ च वीर्यं तेजःप्रभावयोः (हैमः) |

## अभ्यासः - 8
### (श्लोकः 16-19)

1. **श्लोकांशं तथा योजयत यथा श्लोकक्रमः आगच्छेत्–**

[ **मूल श्लोक के क्रम को ध्यान में रखकर श्लोकांशों का योग करें।** Match the portions of the verses according to the order of original verses. ]

| | | | | | | |
|---|---|---|---|---|---|---|
| यथा– | (i) | सर्वदाभिगतः | (क) | सिन्धुभिः | (i) | **सर्वदाभिगतः सद्भिः** |
| | (ii) | समुद्र इव | (ख) | प्रियदर्शनः | (ii) | |
| | (iii) | आर्यः | (ग) | गाम्भीर्ये | (iii) | |
| | (iv) | सदैव | (घ) | सद्भिः | (iv) | |
| | (v) | स च | (ङ) | सर्वसमश्चैव | (v) | |
| | (vi) | कौसल्यानन्द | (च) | वर्धनः | (vi) | |
| | (vii) | समुद्र इव | (छ) | सर्वगुणोपेतः | (vii) | |
| | (viii) | धैर्येण | (ज) | हिमवान् इव | (viii) | |
| | (ix) | विष्णुना सदृशः | (झ) | प्रियदर्शनः | (ix) | |
| | (x) | सोमवत् | (ञ) | वीर्ये | (x) | |
| | (xi) | कालाग्निसदृशः | (ट) | पृथिवीसमः | (xi) | |
| | (xii) | क्षमया | (ठ) | क्रोधे | (xii) | |
| | (xiii) | धनदेन | (ड) | इवापरः | (xiii) | |
| | (xiv) | सत्ये धर्म | (ढ) | समस्त्यागे | (xiv) | |

2. **यथोदाहरणं रिक्तं पूरयत-**

[ **उदाहरण के अनुसार रिक्तस्थानों की पूर्ति करें।** Fill in the blanks as per the examples. ]

| | | **'सदृश'-/'तुल्य'-/'सम'-प्रयोगः** | | **'इव'-प्रयोगः** | |
|---|---|---|---|---|---|
| यथा– | (i) | समुद्रसदृशः | = | **समुद्रः** | **इव** |
| | (ii) | विष्णुसदृशः | = | | |
| | (iii) | कालाग्निसदृशः | = | | |
| | (iv) | पृथिवीसमः | = | | |
| | (v) | हिमवत्समः | = | | |

(vi) अपरधर्मतुल्यः =

(vii) इन्द्रसमः =

(viii) धातृतुल्यः = धाता इव

(ix) भ्रातृतुल्यः =

(x) मातृसमा =

3. **मञ्जूषायां प्रदत्तानि वाक्यखण्डानि आधृत्य यथोदाहरणं रिक्तस्थानेषु वाक्यानि लिखत–**
[ **मञ्जूषा में प्रदत्त वाक्यखण्ड के आधार पर उदाहरणों के अनुसार रिक्तस्थानों में वाक्यों को लिखें।** Write the sentences in the blank spaces as shown in the example with the help of the clause given in the box. ]

| | | | | | |
|---|---|---|---|---|---|
| (i) | रामः | गाम्भीर्यम् | समुद्रः | इव | अस्ति |
| (ii) | | त्यागः | धनदः | | |
| (iii) | | दर्शनम् | सोमः | | |
| (iv) | | क्रोधः | कालाग्निः | | |
| (v) | | वीर्यम् | विष्णुः | | |
| (vi) | | धैर्यम् | हिमवान् | | |
| (vii) | | क्षमा | पृथिवी | | |
| (viii) | | सत्यम् | अपरः धर्मः | | |

| | (क) | (ख) |
|---|---|---|
| यथा– (i) | **रामः गाम्भीर्ये समुद्रः इव अस्ति।** | (i) **रामः गाम्भीर्येण समुद्रः इव अस्ति।** |
| (ii) | । | (ii) । |
| (iii) | । | (iii) । |
| (iv) | । | (iv) । |
| (v) | । | (v) । |
| (vi) | । | (vi) । |
| (vii) | । | (vii) । |
| (viii) | । | (viii) । |

4. **समस्तपदेन विग्रहवाक्येन वा रिक्तं स्थानं पूरयत-**

[ **समस्तपद या विग्रहवाक्यों से रिक्तस्थान भरें।** Fill in the blanks with either compound words or analytical sentences. ]

| | | | | |
|---|---|---|---|---|
| **यथा**– | (i) | रामः गाम्भीर्ये समुद्रसमः अस्ति | = | रामः गाम्भीर्ये **समुद्रेण समः** अस्ति। |
| | (ii) | रामः धैर्येण | = | रामः धैर्येण हिमवता समः विद्यते। |
| | (iii) | | = | रामः क्षमया पृथिव्या समः अस्ति। |
| | (iv) | रामः सत्ये अपरधर्मसमः | = | रामः सत्ये । |
| | (v) | रामः त्यागे धनदसमः | = | रामः त्यागे । |

5. **यथोदाहरणं रिक्तं स्थानं पूरयत-**

[ **उदाहरण के अनुसार रिक्तस्थानों की पूर्ति करें।** Fill in the blanks as shown in the example. ]

| | | | | | |
|---|---|---|---|---|---|
| **यथा**– | (i) | विष्णुना सदृशः – **विष्णुसदृशः** | (ii) | गुरुणा सदृशः – | |
| | (iii) | भानुना सदृशः – | (iv) | सागरेण सदृशः – | |
| | (v) | कविना सदृशः – | (vi) | **वायुना सदृशः** | – वायुसदृशः |
| | (vii) | – प्रजापतिसदृशः | (viii) | | – भ्रातृसदृशः |
| | (ix) | – मित्रसदृशः | (x) | | – पितृसदृशः |

6. **मञ्जूषायां-प्रदत्तानि-पदानि यथास्थानं स्थापयत-**

[ **मञ्जूषा में प्रदत्त पदों को यथास्थान रखें।** Keep the words of the box in the appropriate blank spaces. ]

| | | उपमानम् | उपमेयम् | सादृश्यार्थकः शब्दः | समानः धर्मः |
|---|---|---|---|---|---|
| **यथा**– | (i) | **समुद्रः** | रामः | **इव** | **गाम्भीर्यम्** |
| | (ii) | | रामः | | |
| | (iii) | | रामः | | |
| | (iv) | | रामः | | |
| | (v) | | रामः | | |

(vi) रामः

(vii) रामः

(viii) रामः

| | | | | | |
|---|---|---|---|---|---|
| (i) | समुद्रः इव गाम्भीर्ये | (ii) | धैर्येण हिमवान् इव | (iii) | विष्णुना सदृशः वीर्ये |
| (iv) | सोमवत् प्रियदर्शनः | (v) | कालाग्निसदृशः क्रोधे | (vi) | क्षमया पृथिवीसमः |
| (vii) | धनदेन समः त्यागे | (viii) | सत्ये धर्म इवापरः | | |

**7. यथोदाहरणं रिक्तस्थानं पूरयत-**

[ **उदाहरण के अनुरूप रिक्तस्थान भरें।** Fill in the blanks as shown in the example. ]

| | 'सदृश'-प्रयोगः | | 'तुल्य'-प्रयोगः | | 'सम'-प्रयोगः |
|---|---|---|---|---|---|
| **यथा–(i)** | **पृथिव्या सदृशः पृथिवीसदृशः** | = | **पृथिव्या तुल्यः पृथिवीतुल्यः** | = | **पृथिव्या समः पृथिवीसमः** |
| (ii) | कालाग्निना सदृशः कालाग्निसदृशः | = | | = | |
| (iii) | .................................... | = | धनदेन तुल्यः धनदतुल्यः | = | |
| (iv) | विष्णुना सदृशः विष्णुसदृशः | = | | = | |
| (v) | | = | | = | सोमेन समः |

**8. यथान्वयं योजयत-**

[ **श्लोकों के अन्वय के अनुसार योग करें।** Match as per the construction of the verses. ]

| | | | |
|---|---|---|---|
| **यथा–** (i) | गाम्भीर्ये | (क) | कालाग्निसदृशः |
| (ii) | धैर्येण | (ख) | अपरः धर्मः इव |
| (iii) | क्रोधे | (ग) | हिमवान् इव |
| (iv) | सत्ये | (घ) | समुद्र इव |
| (v) | सद्भिः सर्वदाभिगतः | (ङ) | पृथिवीसमः |
| (vi) | वीर्ये | (च) | सोमवत् |
| (vii) | क्षमया | (छ) | सिन्धुभिः समुद्रः इव |
| (viii) | प्रियदर्शनः | (ज) | धनदेन समः |
| (x) | त्यागे | (झ) | विष्णुना सदृशः |

**श्लोकः**

............................................................................ ।
**तमेवंगुणसम्पन्नं रामं सत्यपराक्रमम् ॥ 19 ॥**

**ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ।**
**प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ 20 ॥**

**यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ।**
............................................................................ **॥ 21 ॥**

**पदच्छेदः**

।
तम् एवं-गुण-सम्पन्नम् रामम् सत्य-परा-क्रमम् ॥ 19 ॥

ज्येष्ठं ज्येष्ठ-गुणैः युक्तम् प्रियम् दशरथः सुतम् ।
प्रकृतीनां हितैः युक्तम् प्रकृति-प्रिय-काम्यया ॥ 20 ॥

यौवराज्येन संयोक्तुम् ऐच्छत् प्रीत्या मही-पतिः ।
॥ 21 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| तम् | तद्- द्० सर्व० पुं० द्विती० एक० | प्रियम् | अ० पुं० द्विती० एक० |
| | | दशरथः | अ० पुं० प्र० एक० |
| एवंगुणसम्पन्नम् | अ० पुं० द्विती० एक० समस्तम् | सुतम् | अ० पुं० द्विती० एक० |
| | | प्रकृतीनाम् | इ० स्त्री० ष० बहु० |
| रामम् | अ० पुं० द्विती० एक० | हितैः | अ० नपुं० तृ० बहु० |
| सत्यपराक्रमम् | अ० पुं० द्विती० एक० समस्तम् | युक्तम् | अ० पुं० द्विती० एक० |
| | | प्रकृतिप्रियकाम्यया | आ० स्त्री० तृ० एक० समस्तम् |
| ज्येष्ठम् | अ० पुं० द्विती० एक० | | |
| ज्येष्ठगुणैः | अ० पुं० तृ० बहु० समस्तम् | यौवराज्येन | अ० नपुं० तृ० एक० |
| युक्तम् | अ० पुं० द्विती० एक० | संयोक्तुम् | तुमुन्नन्तम् अव्ययम् |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ऐच्छत् | इष्- कर्तरि लङ् प्रपु० एक० | महीपतिः | इ० पुं० प्र० एक० समस्तम् |
| प्रीत्या | इ० स्त्री० तृ० एक० | | |

**आकाङ्क्षा**

**ऐच्छत् ।**

| | |
|---|---|
| कः ऐच्छत् ? | दशरथः ऐच्छत् । |
| कथम्भूतः दशरथः ऐच्छत् ? | महीपतिः दशरथः ऐच्छत् । |
| महीपतिः दशरथः किम् ऐच्छत् ? | महीपतिः दशरथः यौवराज्येन संयोक्तुम् ऐच्छत् । |
| महीपतिः दशरथः यौवराज्येन कं संयोक्तुम् ऐच्छत् ? | महीपतिः दशरथः रामं योवराज्येन संयोक्तुम् ऐच्छत् । |
| महीपतिः दशरथः कीदृशं रामं- यौवराज्येन संयोक्तुमैच्छत् ? | महीपतिः ज्येष्ठं सुतं रामं यौवराज्येन संयोक्तुम् ऐच्छत् । |
| कीदृशं ज्येष्ठम् ? | ज्येष्ठगुणैः युक्तं ज्येष्ठम् । |
| पुनः कीदृशम् ? | एवंगुणसम्पन्नम् (पूर्वोक्त-गुण-सम्पन्नम्) । |
| पुनश्च कीदृशम् ? | सत्य-पराक्रमम् । |
| कथम्भूतम् ? | प्रियम् । |
| पुनः कीदृशम् ? | प्रकृतीनां हितैः युक्तम् । |
| महीपतिः दशरथः केन हेतुना रामं यौवराज्येन संयोक्तुम् ऐच्छत् ? | प्रकृतिप्रियकाम्यया प्रीत्या (च) । |

**अन्वयः**

महीपतिः दशरथः तम् एवंगुणसम्पन्नं सत्यपराक्रमं प्रकृतीनां हितैः युक्तं ज्येष्ठगुणैः युक्तं ज्येष्ठं सुतं रामं प्रकृतिप्रियकाम्यया प्रीत्या (च) यौवराज्येन संयोक्तुम् ऐच्छत् ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| महीपतिः | भूपालः | राजा | Emperor |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| दशरथः | दशरथ-नामा भूपतिः | दशरथ | Daśaratha by name |
| एवंगुणसम्पन्नम् | पूर्वोक्तगुणयुक्तम् | पूर्व में कहे गए गुणों से सम्पन्न | endowed with the aforesaid qualities |
| सत्यपराक्रमम् | अमोघपराक्रमम् | अमोघ पराक्रम वाले | possessed of unfailing prowess |
| प्रकृतीनाम् | प्रजानाम् | प्रजा के | of the people |
| हितैः युक्तम् | कल्याणैः युक्तम् | कल्याण में लगे हुए | devoted to the interests |
| ज्येष्ठगुणैः युक्तम् | श्रेष्ठगुणैः युक्तम् | उत्तम गुणों से युक्त | with highest virtues endowed |
| ज्येष्ठम् | ज्येष्ठम् | सबसे बड़े | eldest |
| सुतम् | पुत्रम् | पुत्र | son |
| प्रकृतिप्रियकाम्यया | प्रजाकल्याणेच्छया | प्रजा कल्याण की इच्छा से | with intent to gratify the people |
| प्रीत्या | सहर्षम् | सहर्ष | lovingly |
| संयोक्तुम् | आरोहयितुम् | आरूढ करने के लिए | to invest with office of regent |
| ऐच्छत् | अवाञ्छत् | चाहा | sought |

**भावार्थः**

**संस्कृतम्**– महाराजः दशरथः पूर्वोक्तगुणविशिष्टम् अमोघपराक्रमं प्रजाकल्याणनिरतं ज्येष्ठं न केवलं ज्येष्ठम् अपितु उत्तमगुणैः अपि युक्तम् पुत्रं श्रीरामं प्रजा-कल्याणेच्छया सहर्षं युवराजपदम् आरोहयितुम् अवाञ्छत्। (19-21)

**हिन्दी**– महाराजा दशरथ ने प्रजा कल्याण की कामना से पूर्व में कथित गुणों से युक्त अतुलित पराक्रम वाले, प्रजाहित के चिन्तन में निरत, ज्येष्ठ गुण से युक्त अपने ज्येष्ठ पुत्र श्रीराम को प्रसन्नतापूर्वक युवराज बनाने की इच्छा की। (19-21)

**आंग्लम्**— With intent to gratify the people, the emperor Daśarath, loving by sought to invest with office of Regent, his beloved son Śrī Rāma, who possesed unfailing prowess and was adorned with the aforesaid qualities, who was not only the eldest but also endowed with the highest virtues and devoted to the interests of the people.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

ज्येष्ठगुणैर्युक्तम् = ज्येष्ठगुणैः + युक्तम् (विसर्ग-सन्धिः)

हितैर्युक्तम् = हितैः + युक्तम् (विसर्ग-सन्धिः)

**(ख) समासः**

एवंगुणसम्पन्नम् – एवं ये गुणाः एवंगुणाः (कर्मधारयः); एवंगुणैः सम्पन्नः एवंगुणसम्पन्नः (तृ० तत्पु०) तम्

सत्यपराक्रमम् – सत्यः पराक्रमः यस्य सः सत्यपराक्रमः (बहुव्रीहिः) तम् {सत्यः = अमोघः}

प्रकृतिप्रियकाम्यया – प्रकृतीनां प्रियं प्रकृतिप्रियम् (ष० तत्पु०); प्रकृतिप्रियस्य इच्छा प्रकृतिप्रिय-काम्या तया

**(ग) कृदन्ताः**

सम्पन्नम् – सम् + पद् + क्त

युक्तः – युज् + क्त

संयोक्तुम् – सम् + युज् + तुमुन्

प्रकृतिप्रियकाम्यया – प्रकृति + प्रिय + काम्यच् + अ + टाप् = प्रकृतिप्रियकाम्या

**(घ) तद्धितान्तः**

यौवराज्यम् – (युवराजस्य भावः) युवराज + ष्यञ्

## अभ्यासः - 9

### (श्लोकः $19-21^{1}/_{2}$)

1. **अन्वयं पूरयत-**

[ **अन्वय पूरा करें।** Complete the construction. ]

महीपतिः ______ तम् एवं ______ सत्यपराक्रमं प्रकृतीनां ______ युक्तं ______ युक्तं ज्येष्ठं ______ रामं प्रकृति-प्रियकाम्यया प्रीत्या ______ संयोक्तुम् ______ ।

2. **श्लोकात् यथानिर्देशं पदं स्थापयत-**

[ **यथानिर्देश श्लोक से पदों को चुनकर रिक्त-स्थान भरें।** Fill in the blanks with appropriate words from the verse as per the instruction. ]

प्रथमान्ते पदे- (i) ______ (ii) ______ द्वितीयान्तानि पदानि- (i) ______ (ii) ______ (iii) ______ (iv) ______ (v) ______ (vi) ______ (vii) ............................... (viii) ______ (ix) ______ षष्ठ्यन्तम्- (i) ______

तृतीयाबहुवचनान्तम्- (i) ______ अ० नपुं० तृतीयैकवचनान्तम्- (i) ______

इ० स्त्री० तृ० एक०- (i) ______ तुमुन्नन्तम् अव्ययम्- (i) ______ तिङन्तं क्रियापदम्- (i) ______

3. **शब्दार्थौ यथोचितं योजयत-**

[ **शब्दों को उनके अर्थों से मिलाएँ।** Match the words with their meanings. ]

**यथा-**

| | | | |
|---|---|---|---|
| (i) | महीपतिः | (क) | प्रजानाम् |
| (ii) | हितैः | (ख) | पुत्रम् |
| (iii) | सुतम् | (ग) | कल्याणैः |
| (iv) | प्रकृतीनाम् | (घ) | भूपतिः |
| (v) | प्रीत्या | (ङ) | इष्टवान् |
| (vi) | ऐच्छत् | (च) | स्नेहेन |

**4. प्रश्नस्य उचितम् उत्तरं ☑ चिह्नाङ्कितं कुरुत–**

**[ प्रश्न के उचित उत्तर पर सही चिह्न ☑ लगाएं।** Tick mark ☑ the right answer. ]

(i) दशरथस्य ज्येष्ठः पुत्रः कः।

(क) भरतः (ख) रामः (ग) शत्रुघ्नः (घ) लक्ष्मणः

**सूचना**

**दशरथः रामं यौवराज्येन संयोक्तुम् ऐच्छत्। तत्र हेतुरूपेण कानिचिद् वाक्यानि दत्तानि सन्ति तानि पठत।**
**दशरथ राम को युवराज पद में अभिषिक्त करना चाहते थे। इसके हेतुरूप में कुछ वाक्य प्रदत्त हैं, उन्हें पढ़ें।**
Daśaratha wanted to coronate Rāma in the post of *Yuvarāja*. Read the following sentences given as cause to the incident.

a. रामे दशरथस्य आसक्तिः आसीत्।

b. रामः ज्येष्ठः आसीत्।

c. रामः ज्येष्ठगुणैः अपि युक्तः आसीत्।

d. रामः प्रकृतीनां हितैः युक्तः आसीत्।

e. कौसल्या रामं यौवराज्येन संयोक्तुं दशरथं प्रार्थितवती।

(ii) **रामं युवराजपदे आरोहयितुम् उपर्युक्तेषु किं कारणम् आसीत्।**

**[ राम को युवराज पद में अभिषिक्त करने में निम्नलिखितों में से कौन से कारण सही है।** Which of the causes are true in connection with the coronation of Rāma in the post of Yuvarāja. ]

(क) a

(ख) a, e

(ग) b, c, d

(घ) e

(iii) **'गुणसम्पन्नम्' इति समस्तपदस्य विग्रहः कः ?**

**[ "गुणसम्पन्नम्" इस समस्त पद का विग्रह क्या है ?** Which of the following analytical sentences is true for the compound word *guṇasampannam.* ]

(क) गुणं सम्पन्नः (ख) गुणात् सम्पन्नः

(ग) गुणैः सम्पन्नः (घ) गुणस्य सम्पन्नः

(iv) **'सत्यपराक्रमम्' इति कस्य विशेषणम् ?**

[ **'सत्यपराक्रमम्' किसका विशेषण है ?** The compound word *satyaparākramam* is the qualifer of. ]

(क) 'दशरथः' इत्यस्य (ख) 'महीपतिः' इत्यस्य

(ग) 'रामम्' इत्यस्य (घ) 'प्रीत्या' इत्यस्य

(v) **'प्रकृति-प्रिय-काम्यया' इति पदस्य अर्थः कः ?**

[ **प्रकृति-प्रिय-काम्यया" इस पद का अर्थ क्या है ?** What is the meaning of the compound word *prakṛtipriyakāmyayā*. ]

(क) प्रजाकल्याणम् (ख) प्रजाकल्याणेच्छा

(ग) प्रजाकल्याणेच्छया (घ) प्रजाकल्याणकारकम्

**सूचना- 'यौवराज्यम्' इति पदस्य विषये अग्रे लिखितानि कथनानि पठत-**

[ **'यौवराज्यम्' इस पद के बारे में आगे कुछ कथन हैं, इन्हें पढ़ें।** Read the following statements about the word *yauvarājayam.* ]

(a) यौवराज्यम् इति स्त्रीलिङ्गं पदम् अस्ति।

(b) यौवराज्यम् इत्यत्र 'यौवराज्य' इति तद्धितान्तम् अस्ति।

(c) यौवराज्यम् इत्यस्य विग्रहः युवराजस्य भावः इत्यस्ति।

(d) युवराजशब्दात् ष्यञ्-प्रत्यये कृते यौवराज्य-शब्दः सिद्ध्यति।

(e) युवराजशब्दात् अण्-प्रत्यये सति यौवराज्य-शब्दः सिद्ध्यति।

(vi) **उपर्युक्तेषु सत्यम् अस्ति।**

[ **उपर्युक्त कथनों में सत्य है।** Which of the above statements is true. ]

(क) a

(ख) e

(ग) a, b

(घ) b, c, d

**श्लोकः**

।

तस्याभिषेकसम्भारान् दृष्ट्वा भार्याऽथ कैकयी ॥ 21 ॥

पूर्वं दत्तवरा देवी वरमेनमयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥ 22 ॥

**पदच्छेदः**

........................................................................ ।
तस्य अभिषेक-सम्भारान् दृष्ट्वा भार्या अथ कैकयी ॥ 21 ॥

पूर्वम् दत्त-वरा देवी वरम् एनम् अयाचत ।
वि-वासनम् च रामस्य भरतस्य अभि-षेचनम् ॥ 22 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| तस्य | तद्- द्० सर्व० पुं० ष० एक० | दत्तवरा | आ० स्त्री० प्र० एक० समस्तम् |
| अभिषेकसंभारान् | अ० पुं० द्विती० बहु० समस्तम् | देवी | ई० स्त्री० प्र० एक० |
| | | वरम् | अ० पुं० द्विती० एक० |
| दृष्ट्वा | कृदन्तम् अव्ययम् | एनम् | एतद्- द्० सर्व० द्विती० एक० (वैकल्पिकं रूपम्) |
| भार्या | आ० स्त्री० प्र० एक० | | |
| अथ | अव्ययम् | अयाचत | याच्-कर्तरि लङ् प्रपु० एक० |
| कैकयी | ई० स्त्री० प्र० एक० | विवासनम् | अ० नपुं० द्विती० एक० |
| पूर्वम् | अ० नपुं० द्विती० एक० | अभिषेचनम् | अ० नपुं० द्विती० एक० |

**आकाङ्क्षा**

**अयाचत।**

का अयाचत ? — भार्या अयाचत ।

का भार्या अयाचत ? — भार्या कैकयी अयाचत ।

| | |
|---|---|
| सा किम् अयाचत ? | सा रामस्य विवासनं भरतस्य अभिषेचनं च एनं वरम् अचायत। |
| कीदृशी सा एनं वरम् अयाचत ? | पूर्वं दत्तवरा सा देवी एनं वरम् अयाचत। |
| सा एनं वरं किं कृत्वा अयाचत ? | सा एनं वरं तस्य (रामस्य) अभिषेकसम्भारान् दृष्ट्वा अयाचत। |

**अन्वयः**

अथ तस्य अभिषेकसम्भारान् दृष्ट्वा पूर्वं दत्तवरा भार्या देवी कैकयी रामस्य विवासनं भरतस्य अभिषेचनं च एनं वरम् अयाचत।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| अथ | अनन्तरम् | इसके पश्चात् | After that |
| तस्य | रामस्य | राम के | of Rāma |
| अभिषेकसम्भारान् | अभिषेकप्रस्तुतिम् | अभिषेक प्रस्तुति को | preparations for coronation |
| दृष्ट्वा | विलोक्य | देखकर | having witnessed |
| पूर्वम् | पूर्वकाले | पूर्व में | on a former occassion |
| दत्तवरा | लब्धवरा | वर को प्राप्त की हुई | having granted a boon |
| भार्या | पत्नी | पत्नी | wife |
| देवी | देवी | देवी | queen |
| कैकयी | केकयराजपुत्री | केकय नरेश की पुत्री | Kaikeyī |
| विवासनम् | निर्वासनम् | निर्वासनम् | exile (of Rāma) |
| अभिषेचनम् | राज्याभिषेकम् | राज्याभिषेकम् | installation (of Bharata) |
| एनम् | दशरथम् | दशरथ से | him (to Daśaratha) |
| वरम् | वरम् | वर | boon |
| अयाचत | प्रार्थितवती | मांगा | asked |

**भावार्थः**

**संस्कृतम्**– (राजा दशरथः यदा युवराजपदे रामम् अभिषेक्तुम् ऐच्छत् तदा) रामस्य अभिषेकप्रस्तुतिं विलोक्य कैकयी पूर्वं प्राप्तं वरद्वयं सम्प्रति रामस्य निर्वासनरूपेण भरतस्य च राज्याभिषेकरूपेण दशरथं याचितवती।

**हिन्दी**– (राजा दशरथ ने जब राम को युवराज पद पर अभिषिक्त करना चाहा तब) राज्याभिषेक की प्रस्तुति को देखकर रानी कैकयी ने राजा दशरथ से पूर्व में प्राप्त दो वरों को इस समय माँगते हुए कहा कि राम का राज्य से निर्वासन किया जाये एवं भरत का राज्याभिषेक किया जाये।

**आंग्लम्**– Witnessing the preparations in connection with the installation of Śrī Rāma, the illustrious queen Kaikeyi. Who had been granted a boon on a former occassion, however, asked of him the exile of Rāma and the installation of Bharata.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| तस्याभिषेकसम्भारान् | – | तस्य + अभिषेक-सम्भारान् (दीर्घ-सन्धिः) |
| भार्याऽथ | – | भार्या + अथ (दीर्घ-सन्धिः) |
| भरतस्याभिषेचनम् | – | भरतस्य + अभिषेचनम् (दीर्घ-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| अभिषेकसम्भारान् | – | अभिषेकस्य सम्भाराः अभिषेकसम्भाराः (ष० तत्पु०) तान् अभिषेकसम्भारान् |
| दत्तवरा | – | दत्तौ वरौ यस्यै सा (बहुव्रीहिः) |

(ग) **कृदन्तौ**

| | | |
|---|---|---|
| विवासनम् | – | वि + वस् + णिच् + ल्युट् |
| अभिषेचनम् | – | अभि + सिच् + ल्युट् |

(घ) **कारकम्**

| | | |
|---|---|---|
| कर्मणि षष्ठी | – | रामस्य विवासनम् |
| | | भरतस्य अभिषेचनम् |

**अवधेयम्**

**कर्मणि षष्ठ्याः विषये**

## अभ्यासः - 10
### (श्लोकः 21½-22)

1. **समाधत्त–**

[ **समाधान करें।** Solve the question. ]

(i) कैकयी किं दृष्ट्वा वरम् अयाचत ? ।

(ii) कैकयी कस्य अभिषेचनम् अयाचत ? ।

(iii) कैकयी कस्य अभिषेकसम्भारान् दृष्टवती ? ।

(iv) कैकयी कस्य विवासनम् अयाचत ? ।

(v) कैकय्यै द्वौ वरौ दातुं पूर्वं कः प्रतिज्ञातवान् ? ।

2. **यथोदाहरणं वाक्यं परिवर्तयत–**

[ **उदाहरण के अनुसार वाक्य को बदलें।** Change the sentence as shown in the example. ]

**यथा–**

(iii) गुरुः वेदान् अध्यापयति – अध्यापनं

(iv) शिष्याः समिधः आनयन्ति – आनयनं

(v) भक्ताः देवान् पश्यन्ति – दर्शनं

(vi) कुम्भकारः घटान् निर्माति – निर्माणं

(vii) देवाः अमृतं पिबन्ति – पानं

(viii) अभियान्त्रिकाः सेतून् निर्मान्ति – निर्माणं

(ix) वैद्याः रोगिभ्यः औषधं वितरन्ति – रोगिभ्यः वितरणं

(x) कृषकाः क्षेत्रं कर्षन्ति –

(xi) कवयः कविताः रचयन्ति – रचनां

3. **यथोचितं योजयत–**

[ **उचित मेल बनाएं।** Match with the appropriate one. ]

| | | | |
|---|---|---|---|
| (i) | कैकयी एनं वरम् | (क) | विवासनम् |
| (ii) | भरतस्य | (ख) | दृष्ट्वा |
| (iii) | अभिषेकसम्भारान् | (ग) | अभिषेचनम् |
| (iv) | रामस्य | (घ) | अयाचत |
| (v) | पूर्वं | (ङ) | दत्तवरा देवी |

4. **असमानं पृथक्कुरुत–**

[ **असमान को अलग करें।** Separate the odd one. ]

(i) अभिषेकः, अभिषेचनम्, यौवराज्येन संयोजनम्, निर्वासनम्

(ii) भार्याम्, पत्नीम्, दारान्, युवतिम्

(iii) दृष्ट्वा, अवलोक्य, निरीक्ष्य, आकर्ण्य

(iv) अकथयत्, अब्रवीत्, उक्तवती, अपश्यत्

(v) एनम्, इमम्, एतम्, सर्वम्

5. **उपरि (प्रश्नसंख्या-4) लिखितेभ्यः पदेभ्यः एकैकस्मात् यथोचितं यथाक्रमम् एकैकं पदं प्रयुङ्क्त–**
[ **उपर्युक्त (प्रश्न संख्या-4) पदों में से यथाक्रम प्रत्येक से यथोचित एक-एक पद लेकर रिक्तस्थान भरें।** Fill in the blanks with one appropriate word each from the question no. 4. ]

**यथा–** (i) कैकयी रामस्य चतुर्दशवर्षाणि यावत् राज्यात् **निर्वासनम्** याचितवती।

(ii) जनकः ________ सीतां योग्येन यूना सह परिणेतुं सीतास्वयंवरम् आयोजितवान्।

(iii) वाल्मीकेः वचः ________ नारदः रामस्य विषयेऽब्रवीत्।

(iv) कैकयी रामस्य अभिषेकसम्भारान् ________ ।

(v) रामः सर्वज्ञः आसीत् अतः सः ________ जानाति स्म।

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**
[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) याच् (उभयपदे लटि लङि च) (ख) वर (ग) विवासन (घ) पूर्व (ङ) दृष्ट्वा

**श्लोकः**

**स सत्यवचनाद्राजा धर्मपाशेन संयतः ।**
**विवासयामास सुतं रामं दशरथः प्रियम् ॥ 23 ॥**

**पदच्छेदः**

सः सत्य-वचनात् राजा धर्म-पाशेनं संयतः ।
वि-वासयामास सुतम् रामम् दशरथः प्रियम् ॥23 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सः | तद् - द् ० सर्व ० पुं ० प्र ० एक० | संयतः | अ० पुं० प्र० एक० |
| सत्यवचनात् | अ० पुं० प० एक० समस्तम् | विवासयामास | वि+वस्+णिच्-कर्तरि लिट् प्रपु० एक० |
| राजा | न्० पुं० प्र० एक० | सुतम् | अ० पुं० द्विती० एक० |
| धर्मपाशेन | अ० पुं० तृ० एक० समस्तम् | दशरथः | अ० पुं० प्र० एक० |
| | | प्रियम् | अ० पुं० द्विती० एक० |

**आकाङ्क्षा**

**विवासयामास।**

| | |
|---|---|
| कः विवासयामास ? | राजा विवासयामास । |
| कः राजा विवासयामास ? | राजा दशरथः विवासयामास । |
| कीदृशः दशरथः विवासयामास ? | संयतः दशरथः विवासयामास । |
| केन संयतः राजा दशरथः विवासयायम ? | धर्मपाशेन संयतः राजा दशरथः विवासयामास । |
| राजा दशरथः कथं धर्मपाशेन संयतः ? | राजा दशरथः सत्यवचनात् धर्मपाशेन संयतः । |
| सत्यवचनात् धर्मपाशेन संयतः राजा दशरथः कं विवासयामास ? | सत्यवचनात् धर्मपाशेन संयतः राजा दशरथः सुतं विवासयामास । |
| दशरथः कं सुतं विवासयामास ? | दशरथः सुतं रामं विवासयामास । |
| दशरथः कीदृशं रामं विवासयामास ? | दशरथः प्रियं रामं विवासयामास । |

**अन्वयः**

सत्यवचनात् धर्मपाशेन संयतः सः राजा दशरथः प्रियं सुतं रामं विवासयामास ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सत्यवचनात् (सत्यवचनत्वात्) | सत्यप्रतिज्ञत्वात् | सत्य प्रतिज्ञ होने के कारण | due to his speak-ing the truth |
| धर्मपाशेन | धर्मबन्धनेन | धर्म बन्धन से | by the tie of duty |
| संयतः | बद्धः | बँधा हुआ | bound |
| सः राजा दशरथः | सः नृपः दशरथः | वह राजा दशरथ | that king Daśaratha |
| प्रियम् | अतिप्रियम् | प्रिय | to his beloved |
| सुतम् | पुत्रम् | पुत्र को | son |
| विवासयामास | निर्वासयामास | निर्वासित किया | exiled |

**भावार्थः**

**संस्कृतम्**– धर्मबन्धनेन बद्धः राजा दशरथः सत्यप्रतिज्ञया अतिप्रियम् अपि पुत्रं रामं राज्यात् निर्वासितवान् ।

**हिन्दी**– धर्म बन्धन से बद्ध राजा दशरथ ने सत्यप्रतिज्ञ होने के कारण अत्यन्त प्रिय राम को राज्य से निर्वासित कर दिया ।

**आं लम्**– Bound by the tie of duty due to his speaking the truth, King Daśaratha exiled his beloved son, Rāma.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

स सत्यवचनात् – सः + सत्यवचनात् (विसर्ग-सन्धिः)

सत्यवचनाद्राजा – सत्यवचनात् + राजा (जश्त्व-सन्धिः)

**(ख) समासः**

सत्यवचनात् – सत्यं वचनं यस्य सः सत्यवचनः (बहुव्रीहिः) तस्मात् सत्यवचनात् {अत्र सत्यवचनात् इत्यस्य तात्पर्यं सत्यवचनत्वात् = सत्यप्रतिज्ञत्वात् इति अस्ति}

धर्मपाशेन – धर्मस्य पाशः (ष० तत्पु०); अथवा धर्मः एव पाशः (कर्मधारयः) तेन धर्मपाशेन

**(घ) कृदन्तः**

संयतः – (संयत) सम् + यम् + क्त

---

## अभ्यासः - 11
## (श्लोकः 23)

**1. यथोचितं योजयत–**

[ **सही मेल बनाएं।** Match with the appropriate one. ]

| | | | |
|---|---|---|---|
| (i) | धर्मबन्धने | (क) | सत्यवचनः आसीत् |
| (ii) | प्रियं सुतं रामं | (ख) | बद्धः राजा दशरथः |
| (iii) | यतः दशरथः | (ग) | विवासयामास |

**2. कोष्ठके प्रदत्तैः पदैः वाक्यं पूरयत–**

[ **कोष्ठक में प्रदत्त पदों से वाक्यों की पूर्ति करें।** Complete the sentence with the words given in the bracket. ]

सत्यप्रतिज्ञत्वात् धर्मपाशेन ______ राजा ______ प्रियं ______ रामं ______ ।

**(निर्वासयामास, बद्धः, दशरथः, पुत्रं)**

**3. असम्बद्धं पृथक्कुरुत–**

[ **असम्बद्ध को पृथक् करें।** Separate the odd one. ]

**यथा–** (i) राजा, भूपतिः, स्वामी, प्रभुः, भिक्षुकः ...... **भिक्षुकः**

(ii) धर्मः, नीतिः, पुराणम्, कर्तव्यम्

(iii) सुतः, गुरुः, पुत्रः, आत्मजः

(iv) विवासयामास, निष्कासयामास, जगाम, निरवासयत्

(v) वाचालः, प्रतिज्ञातः, प्रतिश्रुतः

4. **उपरि प्रदत्तेषु पदसमूहेषु एकैकस्मात् समूहात् एकैकं यथोपयुक्तं पदं चित्वा रिक्तस्थानं पूरयत-**
[**ऊपर प्रदत्त पदसमूह में से यथोचित एक-एक पद चुनकर रिक्तस्थानों में भरें।** Fill in the blanks by selecting one word each from the above mentioned word group. ]

(i) बौद्धधर्मानुयायिषु संन्यासी उच्यते ।
(ii) श्रीमद्भागवतम् एकं अस्ति ।
(iii) वसिष्ठः रामस्य आसीत् ।
(iv) रामेण सह लक्ष्मणोऽपि वनं ।
(v) यः सम्यक् बहु भाषते सः 'वाग्मी' इति कथ्यते, यः कुत्सितं बहु भाषते सः इति कथ्यते ।

5. **यथोदाहरणं रिक्तं स्थानं पूरयत-**
[**उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks according to the examples. ]

**यथा-** (i) वि + वस् + णिच् - कर्तरि लिटि प्रपु० एक० - **विवासयामास**
(ii) प्र + पठ् + णिच् - कर्तरि लिटि प्रपु० एक० -
(iii) श्रु + णिच् - कर्तरि लिटि प्रपु० एक० -
(iv) गम् + णिच् - कर्तरि लिटि प्रपु० एक० -
(v) दृश् + णिच् - कर्तरि लिटि प्रपु० एक० -

6. **यथोदाहरणं मञ्जूषा-प्रदत्तेन शब्देन रिक्तं स्थानं पूरयत-**
[**उदाहरण के अनुसार मञ्जूषा प्रदत्त शब्दों से रिक्त-स्थान भरें।** Fill in the blanks with the words given in the box as shown in the examples. ]

| प्रणत, संयत, संगत, निहत, निरत, संरत |
|---|

**यथा-** (i) सम् + यम् + क्त - **संयत**
(ii) सम् + रम् + क्त -
(iii) सम् + गम् + क्त -
(iv) नि + रम् + क्त -
(v) नि + हन् + क्त -
(vi) प्र + नम् + क्त -

**श्लोकः**

**स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।**
**पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ 24 ॥**

**पदच्छेदः**

सः जगाम वनं वीरः प्रति-ज्ञाम् अनु-पालयन् ।
पितुः वचन-निर्देशात् कैकेय्याः प्रिय-कारणात् ॥ 24 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सः | तद्- द्० सर्व० पुं० प्र० एक० | अनुपालयन् | अनुपालयत्- |
| जगाम | गम्- कर्तरि लिट् प्रपु० एक० | | त्० पुं० प्र० एक० |
| वनम् | अ० नपुं० द्विती० एक० | पितुः | पितृ- ऋ० पुं० ष० एक० |
| वीरः | अ० पुं० प्र० एक० | वचननिर्देशात् | अ० पुं० प० एक० समस्तम् |
| प्रतिज्ञाम् | आ० स्त्री० द्विती० एक० | कैकेय्याः | ई० स्त्री० ष० एक० |
| | | प्रियकारणात् | अ० नपुं० प० एक० समस्तम् |

**आकाङ्क्षा**

**जगाम।**

कः जगाम ? — सः वीरः (रामः) जगाम ।

सः वीरः किम् अनुपालयन् जगाम ? — सः वीरः प्रतिज्ञाम् अनुपालयन् जगाम ।

कस्मात् सः वनं जगाम ? — पितुः वचननिर्देशात् सः वनं जगाम ।

पुनः कस्मात् सः वनं जगाम ? — सः कैकेय्याः प्रियकारणात् वनं जगाम ।

**अन्वयः**

सः वीरः पितुः वचननिर्देशात् कैकेय्याः प्रियकारणात् प्रतिज्ञाम् अनुपालयन् वनं जगाम ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सः | असौ | वह | he |
| वीरः | शूरः | वीर | the hero (Rāma) |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| कैकेय्याः प्रिय-कारणात् | भरतमातुः प्रियहेतोः | कैकेयी की प्रसन्नता के कारण | with a view to please Kaikeyī |
| पितुः वचन-निर्देशात् | जनकस्य आज्ञया | पिता की आज्ञा से | in obedience to his father's command |
| प्रतिज्ञाम् | सन्धाम् | प्रतिज्ञा का | the pledge |
| अनुपालयन् | अनुसरन् | पालन करते हुए | in order to implement |
| वनम् | विपिनम् | वन को | to the forest |
| जगाम | अगमत् | गये | went |

**भावार्थः**

**संस्कृतम्**– वीरः रामचन्द्रः कैकेय्याः प्रीतिकारणात् पितुः दशरथस्य वचनरूपनिर्देशात् स्वकृतां प्रतिज्ञां पालयन् वनं गतवान्।

**हिन्दी**– वीर रामचन्द्र कैकेयी की प्रसन्नता के कारणभूत पिता के वचन रूप आदेश से (कैकेयी के समक्ष की गई पितृवचन पालन करने की) उनकी प्रतिज्ञा का पालन करते हुए वन गए।

**आंग्लम्**– In obedience to his father's command in the form of the boon (granted by him in favor of Kaikeyī) and with a view to pleasing Kaikeyī, the hero Rāma retired to the woods in order to implement the pledge.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) समासः**

वचननिर्देशात् – वचनम् एव निर्देशः (कर्मधारयः) तस्मात्

प्रियकारणात् – प्रियं च तत् कारणं प्रियकारणम् (कर्मधारयः) तस्मात्

## अभ्यासः - 12
### (श्लोकः 24)

**1. शब्दार्थौ यथोचितं योजयत-**

[ **शब्दों को सही अर्थों से जोड़ें।** Match the words with their appropriate meanings. ]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | जगाम | (क) | जनकस्य |
| (ii) | पितुः | (ख) | शूरः |
| (iii) | वीरः | (ग) | ययौ |
| (iv) | प्रतिज्ञाम् | (घ) | अनुसरन् |
| (v) | अनुपालयन् | (ङ) | प्रतिश्रुतिम् |

**2. सार्थकं यथोचितं योजयत-**

[ **सार्थक जोड़ बनाएं।** Match Significantly. ]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | सः | (क) | अनुपालयन् |
| (ii) | प्रतिज्ञाम् | (ख) | जगाम |
| (iii) | कैकेय्याः | (ग) | वचननिर्देशात् |
| (iv) | पितुः | (घ) | प्रियकारणात् |

**3. असम्बद्धं शब्दं पृथक्कुरुत-**

[ **असम्बद्ध शब्द को अलग करें।** Separate the add one. ]

**यथा–** (i) जगाम, ययौ, अकथयत्, प्रस्थितवान् **अकथयत्**

(ii) अनुपालयन्, अनुसरन्, अनुगच्छन्, अनुभवन्

(iii) प्रतिज्ञा, प्रतिश्रुतिः, प्रतिरोधः, प्रतिवचनम्

(iv) वीरः, शूरः, सन्तप्तः, वीर्यवान्, प्रतापवान्

(v) अरण्यम्, वनम्, काननम्, गह्वरम्, विपिनम्

**4. उत्तरं लिखत-**

[ **उत्तर दें।** Answer the questions. ]

(i) कः वनं जगाम ? ।

(ii) कैकेय्याः प्रियं कारणं किम् आसीत् ? ।

(iii) कस्य वचननिर्देशात् रामः वनं ययौ ? ।

5. **अधोलिखितं यथोचितं योजयत-**

[ **अधोलिखितों का सही मेल बनाएं।** Match the following. ]

| | | | |
|---|---|---|---|
| (i) | जगाम | (क) | द्वितीयान्तम् |
| (ii) | अनुपालयन् | (ख) | षष्ठ्यन्तम् |
| (iii) | वनम् | (ग) | तिङन्तम् |
| (iv) | पितुः | (घ) | प्रथमान्तम् |
| (v) | प्रियकारणात् | (ङ) | पञ्चम्यन्तम् |

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) गम् (लटि, लिटि, लङि) (ख) अनुपालयत् (ग) पितृ (घ) निर्देश (ङ) प्रतिज्ञा

**श्लोकः**

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह।
स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्धनः ॥ 25 ॥

भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्।
॥ 26 ॥

**पदच्छेदः**

तम् व्रजन्तम् प्रियः भ्राता लक्ष्मणः अनु-जगाम ह।
स्नेहात् विनय-सम्पन्नः सुमित्रानन्द-वर्धनः ॥ 25 ॥

भ्रातरम् दयितः भ्रातुः सौभ्रात्रम् अनु-दर्शयन्।
॥ 26 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| तम् | तद्- द्० सर्व० पुं० द्विती० एक० | विनयसम्पन्नः | अ० पुं० प्र० एक० समस्तम् |
| व्रजन्तम् | त्० पुं० द्विती० एक० | सुमित्रानन्दवर्धनः | अ० पुं० प्र० एक० समस्तम् |
| प्रियः | अ० पुं० प्र० एक० | भ्रातरम् | ऋ० पुं० द्विती० एक० |
| भ्राता | ऋ० पुं० प्र० एक० | दयितः | अ० पुं० प्र० एक० |
| अनुजगाम | अनु + गम् कर्तरि लिट् प्रपु० एक० | भ्रातुः | ऋ० पुं० ष० एक० |
| | | सौभ्रात्रम् | अ० नपुं० द्विती० एक० समस्तम् |
| ह | अव्ययम् | | |
| स्नेहात् | अ० पुं० प० एक० | अनुदर्शयन् | त्० पुं० प्र० एक० |

**आकाङ्क्षा**

**अनुजगाम।**

कः अनुजगाम ? — लक्ष्मणः अनुजगाम।

कीदृशः लक्ष्मणः अनुजगाम ? — भ्राता लक्ष्मणः अनुजगाम।

| | |
|---|---|
| लक्ष्मणः कीदृशः भ्राता ? | प्रियः विनयसम्पन्नः (च)। |
| पुनः सः कीदृशः ? | सुमित्रानन्दवर्धनः। |
| लक्ष्मणः कम् अनुजगाम ? | लक्ष्मणः भ्रातरम् (रामम्) अनुजगाम। |
| कीदृशं भ्रातरम् अनुजगाम ? | व्रजन्तं भ्रातरम् अनुजगाम। |
| लक्ष्मणः कस्य दयितः ? | भ्रातुः दयितः। |
| लक्ष्मणः भ्रातरं कस्मात् कारणात् अनुजगाम ? | स्नेहात्। |
| लक्ष्मणः किम् अनुदर्शयन् अनुजगाम ? | सौभ्रात्रम् अनुदर्शयन् अनुजगाम। |

**अन्वयः**

विनयसम्पन्नः सुमित्रानन्दवर्धनः भ्रातुः दयितः प्रियः भ्राता लक्ष्मणः स्नेहात् सौभ्रात्रम् अनुदर्शयन् तं व्रजन्तं भ्रातरम् अनुजगाम।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| विनयसम्पन्नः | विनम्रः | विनम्र | adorned with modesty |
| सुमित्रानन्दवर्धनः | सुमित्राप्रीतिवर्धकः | सुमित्रा की प्रीति को बढ़ाने वाले | one who enhanced the delight of (his mother) Sumitrā |
| भ्रातुः | अग्रजस्य रामस्य | भाई के | of (his) brother |
| दयितः | प्रियः | प्रिय | favourite |
| प्रियः | इष्टः | प्रिय | loving |
| भ्राता | अनुजः | भाई | younger brother |
| लक्ष्मणः | लक्ष्मण-नामा | लक्ष्मण | Lakṣmaṇa |
| सौभ्रात्रम् | उत्तमभ्रातृभावम् | उत्तमभ्रातृत्व | his amicable brotherly relation |
| अनुदर्शयन् | आचरन् | प्रदर्शित करता हुआ | showing |
| स्नेहात् | अनुरागात् | स्नेह से | out of affection |
| व्रजन्तम् | गच्छन्तम् | जाते हुए | setting out |
| तम् | (पूर्वोक्तम्) रामम् | राम को | aforesaid |
| भ्रातरम् | अग्रजम् (रामम्) | भाई को | brother |
| अनुजगाम | अनुययौ | अनुसरण किया | followed |

**भावार्थः**

**संस्कृतम्**– विनतः सुमित्रानन्ददायकः प्रियः भ्राता लक्ष्मणः स्नेहवशीभूतः वनं गच्छन्तं रामम् अनुसृतवान् ।

**हिन्दी**– भ्राता राम के प्रति सौहार्द रखने वाले अनुज सुमित्रानन्दन विनयसम्पन्न लक्ष्मण जो श्री राम के अत्यधिक प्रिय थे उन्होंने भी वन जाते हुए राम का स्नेहवश अनुगमन किया ।

**आंग्लम्**– His loving (younger) brother, Lakṣmaṇa who enhanced the delight of (his own mother) Sumitrā (the younger of the two other principal consorts of Emperor Daśaratha) and who was not only adorned with modesty but a favorite of his brother ( Śrī Rāma) followed his aforesaid brother out of affection as the latter set out (on his journey to the forest), thus testifying to his amicable relation.

**निदर्शनम्**

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| प्रियो भ्राता | – | प्रियः + भ्राता (विसर्ग-सन्धिः) |
| लक्ष्मणोऽनुजगाम | – | लक्ष्मणः + अनुजगाम (विसर्ग-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| विनयसम्पन्नः | – | विनयेन सम्पन्नः (तृ० तत्पु०) |
| गुणयुक्तः | – | गुणेन युक्तः (तृ० तत्पु०) |
| सुमित्रानन्दवर्धनः | – | आनन्दस्य वर्धनः आनन्दवर्धनः (ष० तत्पु०) |
| | | सुमित्रायाः आनन्दवर्धनः सुमित्रानन्दवर्धनः (ष० तत्पु०) |

(ग) **कृदन्ताः**

| | | |
|---|---|---|
| व्रजन्तम् | – | व्रज् + शतृ = व्रजत् |
| अनुदर्शयन् | – | अनु + दृश् + शतृ = अनुदर्शयत् |
| वर्धनः | – | वृध् + ल्यु (कर्तरि ल्यु) वर्धयति इति वर्धनः |
| प्रियः | – | प्रि + क (इगुपध-ज्ञा-प्री-किरः कः) |

(घ) **तद्धितान्तः**

| | | |
|---|---|---|
| सौभ्रात्रम् | – | सुभ्रातृ + अण् (भावे) |

(ii) **कोशः**

| | | |
|---|---|---|
| विनयः | – | विनयो धर्मविद्यार्थशिक्षाचारप्रशान्तिषु (वैजयन्ती-कोशः) |
| लक्ष्मणः | – | लक्ष्मीवान् लक्ष्मणः श्रीमान् (पर्यायपाठः) |

## अभ्यासः - 13

### (श्लोकः 25–26½)

1. **सम्बद्धं योजयत-**

[**सम्बद्ध शब्दों को मिलाएं।** Match the related words.]

| | | | |
|---|---|---|---|
| **यथा–** (i) | तं | (क) | भ्राता |
| (ii) | प्रियः | (ख) | व्रजन्तं भ्रातरम् |
| (iii) | भ्राता | (ग) | अनुदर्शयन् |
| (iv) | सौभ्रात्रम् | (घ) | लक्ष्मणः |
| (v) | भ्रातुः | (ङ) | दयितः |

2. **शब्दार्थौ मेलयत-**

[**शब्द को अर्थ से मिलाएं।** Join the word with its meaning.]

| | | | |
|---|---|---|---|
| **यथा–** (i) | अनुजगाम | (क) | सुभ्रातृभावम् |
| (ii) | अनुदर्शयन् | (ख) | प्रियः |
| (iii) | दयितः | (ग) | गच्छन्तम् |
| (iv) | व्रजन्तम् | (घ) | आचरन् |
| (iv) | सौभ्रात्रम् | (ङ) | अनुययौ |

3. **यथोदाहरणं वाक्यान्तरं पूरयत-**

[**उदाहरण के अनुसार अन्य वाक्यों को पूरा करें।** Complete the other sentences according to the example.]

**यथा–** (i) भ्राता लक्ष्मणः **व्रजन्तं** **भ्रातरम्** अनुजगाम (व्रजत्, भ्रातृ)

(ii) तं ............ द्वैपायनः आजुहाव (व्रजत्, पुत्र)

(iii) तं ............ छात्रः शुश्राव (कथयत्, गुरु)

(iv) तं ............ गुरुः प्रबोधयामास (पृच्छत्, शिष्य)

(v) सीताम् ............ जटायुः अवरोद्धुम् अयतत (अपहरत्, रावण)

**4. यथोदाहरणं विशेष्यानुगुणं शत्रन्तस्य रूपं लिखत-**

[ **उदाहरण के आधार पर विशेष्य के अनुसार शत्रन्त रूप लिखें।** Write the words ending śatṛ suffix according to the nouns as shown in the example. ]

**यथा-** (i) **व्रजन्तं** (व्रजत्) भ्रातरं लक्ष्मणः अनुजगाम।

(ii) (पठत्) शिष्यं गुरुः पाठयति।

(iii) (पाठयत्) अध्यापकेन छात्रः पृष्टः।

(iv) (शृण्वत्) शिष्याय दक्षिणां देहि।

(v) (धावत्) अश्वात् भटः पतति।

(vi) (पृच्छत्) मम कः दोषः ?

(vii) (गच्छत्) जनस्य स्खलनम् अपि प्रमादतः सम्भवति।

(viii) कार्यं (कुर्वत्) जनाः ईश्वरं भजेरन्।

(ix) (पृच्छत्) वाल्मीकिं नारदः उवाच।

(x) (गच्छत्) हनुमन्तं सुरसा राक्षसी उक्तवती।

**5. मञ्जूषायां प्रदत्तैः शब्दैः यथोचितं रिक्तं स्थानं पूरयत-**

[ **मञ्जूषा में प्रदत्त शब्दों के उचित प्रयोग से रिक्तस्थान भरें।** Fill in the blanks with appropriate words given in the box. ]

विनयसम्पन्नः सुमित्रानन्दवर्धनः भ्रातुः ______ प्रियः भ्राता लक्ष्मणः स्नेहात् सौभ्रात्रम् ______ तं ______ भ्रातरम् ______ ।

**अनुजगाम, दयितः, व्रजन्तम्, अनुदर्शयन्**

**6. प्रश्नोत्तरं यथोचितं योजयत-**

[ **प्रश्न को उचित उत्तर से जोड़ें।** Join the question with its correct answer. ]

| | | | |
|---|---|---|---|
| **यथा-** (i) | कः वनम् अव्रजत् ? | (क) | लक्ष्मणः |
| (ii) | कः रामम् अनुजगाम ? | (ख) | लक्ष्मणस्य |
| (iii) | सुमित्रानन्दवर्धनः कस्य विशेषणम् ? | (ग) | रामः |
| (iv) | लक्ष्मणः किम् अनुदर्शितवान् ? | (घ) | रामम् |
| (v) | लक्ष्मणः कम् अनुजगाम ? | (ङ) | सौभ्रात्रम् |

**श्लोकः**

।

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ 26 ॥

जनकस्य कुले जाता देवमायेव निर्मिता।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ॥ 27 ॥

सीताप्यनुगता रामं शशिनं रोहिणी यथा।
॥ 28 ॥

**पदच्छेदः**

।

रामस्य दयिता भार्या नित्यं प्राण-समा हिता ॥ 26 ॥

जनकस्य कुले जाता देव-माया इव निर्मिता।
सर्व-लक्षण-सम्पन्ना नारीणाम् उत्तमा वधूः ॥ 27 ॥

सीता अपि अनु-गता रामम् शशिनम् रोहिणी यथा।
॥ 28 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| रामस्य | अ० पुं० ष० एक० | जाता | आ० स्त्री० प्र० एक० |
| दयिता | आ० स्त्री० प्र० एक० | देवमाया | आ० स्त्री० प्र० एक० |
| भार्या | आ० स्त्री० प्र० एक० | | समस्तम् |
| नित्यम् | अव्ययम् | इव | अव्ययम् |
| प्राणसमा | आ० स्त्री० प्र० एक० | निर्मिता | आ० स्त्री० प्र० एक० |
| | समस्तम् | सर्वलक्षणसम्पन्ना | आ० स्त्री० प्र० एक० |
| हिता | आ० स्त्री० प्र० एक० | | समस्तम् |
| जनकस्य | अ० पुं० ष० एक० | नारीणाम् | ई० स्त्री० ष० बहु० |
| कुले | अ० पुं० स० एक० | उत्तमा | आ० स्त्री० प्र० एक० |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| वधूः | ऊ० स्त्री० प्र० एक० | शशिनम् | न्० पुं० द्विती० एक० |
| सीता | आ० स्त्री० प्र० एक० | रोहिणी | ई० स्त्री० प्र० एक० |
| अपि | अव्ययम् | यथा | अव्ययम् |
| अनुगता | आ० स्त्री० प्र० एक० समस्तम् | | |

**आकाङ्क्षा**

**जाता।**

| | |
|---|---|
| का जाता ? | सीता जाता। |
| सा कस्य कुले जाता ? | सा जनकस्य कुले जाता। |
| सा कस्य भार्या ? | सा रामस्य भार्या। |
| सा रामस्य कीदृशी भार्या ? | सा रामस्य दयिता नित्यं प्राणसमा हिता च भार्या। |
| सीता का इव निर्मिता ? | सीता देवमाया इव निर्मिता। |
| सीता कीदृशी वधूः ? | सीता नारीणाम् उत्तमा वधूः। |
| तादृशी सीता कम् अनुगता ? | सीता रामम् अनुगता। |
| सीता रामं कम् इव अनुगता ? | सीता रामम् (तथा) अनुगता यथा रोहिणी शशिनम् (अनुगता)। |

**अन्वयः**

जनकस्य कुले जाता देवमाया इव निर्मिता रामस्य दयिता नित्यं प्राणसमा हिता भार्या सर्वलक्षणसम्पन्ना नारीणाम् उत्तमा वधूः सीता अपि यथा शशिनं रोहिणी (तथा) रामम् अनुगता।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| जनकस्य कुले | मिथिला-नृपस्य वंशे | मिथिला नरेश के वंश में | in Janaka's family |
| जाता | उत्पन्ना | उत्पन्न | born |
| देवमाया इव | मोहिनी इव | मोहिनी के समान | like lord's wonderful poetency |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| निर्मिता | कृता | निर्मित | manifested by the lord himself |
| रामस्य दयिता | राम-प्रिया | राम की प्रिया | the beloved of Rāma |
| नित्यम् | सर्वदा | सदा | ever |
| प्राणसमा | प्राणतुल्या | प्राण के समान | dear (to him) as life |
| हिता | हितकारिणी | हित करने वाली | friendly |
| भार्या | पत्नी | पत्नी | spouse |
| सर्वलक्षणसम्पन्ना | सर्वशुभलक्षणोपेता | सभी उत्तम स्त्री के लक्षण से युक्त | endowed with all auspicious marks |
| नारीणाम् | स्त्रीणाम् | स्त्रियों में | amongst the women |
| उत्तमा | श्रेष्ठा | श्रेष्ठ | best |
| वधूः | स्नुषा | वधू | the daughter-in-law |
| सीता अपि | जानकी अपि | सीता भी | Śitā also |
| रोहिणी | रोहिणी | चन्द्रमा की पत्नी रोहिणी | Rohinī (wife of the moon) |
| शशिनं यथा | चन्द्रम् इव | जैसे चन्द्र (के) | like the moon |
| रामम् अनुगता | रामम् अनुयाता | राम के पीछे गई | accompanied by Śrī Rāma |

**भावार्थः**

**संस्कृतम्**- जनककुलोत्पन्ना मोहिनी इव स्थिता नारीणां श्रेष्ठा वधूः सर्वगुणसम्पन्ना रामस्य प्रिया भार्या सीता च यथा रोहिणी चन्द्रं तथा रामम् अनुजगाम।

**हिन्दी**– राजा जनक के कुल में उत्पन्न मोहिनी की तरह निर्मित राम की प्रेयसी, सदा प्राणसदृश हितकारिणी, उत्तम स्त्री के सभी गुणों से भूषित, स्त्रियों में श्रेष्ठ सीता ने भी राम का उसी प्रकार अनुगमन किया जिस प्रकार रोहिणी चन्द्रमा का अनुगमन करती है।

**आंग्लम्**– Śrī Rāma's newly wedded spouse Sītā, who was dear to him as life and was ever friendly to him, who was descended in the line of Janak was

endowed with all auspicious marks and was a jewel among women and who looked like the lord's own wonderful potency manifested by the Lord Himself also accompanied Śrī Rāma as Rohiṇī to moon.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| देवामायेव | – | देवमाया + इव (गुण-सन्धिः) |
| सीताऽपि | – | सीता + अपि (दीर्घ-सन्धिः) |
| सीताऽप्यनुगता | – | सीताऽपि + अनुगता (यण्-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| प्राणसमा | – | प्राणैः समा प्राणसमा (तृ० तत्पु०) |
| सर्वलक्षणसम्पन्ना | – | सर्वाणि च तानि लक्षणानि सर्वलक्षणानि (कर्मधारयः); सर्वलक्षणैः सम्पन्ना सर्वलक्षणसम्पन्ना (तृ० तत्पु०) |
| देवमाया | – | देवानां माया देवमाया (ष० तत्पु०) |

(ग) **कारकम्** नारीणाम् उत्तमा वधूः (निर्धारणे षष्ठी, 'यतश्च निर्धारणम्')

(ii) **कोशः**

| | | |
|---|---|---|
| माया | – | माया दम्भे कृपायां च (कोशः) |
| वधूः | – | अचिरोढा तु वधूः (वैजयन्तीकोशः) |
| यथा | – | यथा तथेवैवं साम्ये (अमरकोशः) |

**अवधेयम्**

**निर्धारणे षष्ठ्याः सप्तम्याः च विषये**

## अभ्यासः - 14

### (श्लोकः 26½-27-28½)

**1. सम्बद्धं यथोचितं योजयत-**

[ **सम्बन्धित का सही मेल बनाएं।** Match the following. ]

| | | | |
|---|---|---|---|
| **यथा**– (i) | देवमाया इव | (क) | उत्तमा वधूः |
| (ii) | जनकस्य | (ख) | शशिनम् |
| (iii) | यथा रोहिणी | (ग) | कुले जाता |
| (iv) | नारीणाम् | (घ) | निर्मिता |
| (v) | सीता अपि अनुगता | (ङ) | रामम् |
| (vi) | रामस्य | (च) | दयिता भार्या |

**2. शब्दार्थौ योजयत-**

[ **शब्दों को उनके अर्थ से जोड़ें।** Match the words with their meanings. ]

| | | | |
|---|---|---|---|
| **यथा**– (i) | दयिता | (क) | स्त्रीणाम् |
| (ii) | भार्या | (ख) | श्रेष्ठा |
| (iii) | अनुगता | (ग) | प्रेयसी |
| (iv) | उत्तमा | (घ) | पत्नी |
| (v) | नारीणाम् | (ङ) | अनुयाता |

**3. प्रश्नोत्तरं योजयत-**

[ **प्रश्नों को उत्तर से जोड़ें।** Match the questions with their answers. ]

| | | | |
|---|---|---|---|
| **यथा**– (i) | सीता कस्य दयिता | (क) | शशिनम् |
| (ii) | सीता कस्य कुले जाता | (ख) | रामस्य |
| (iii) | रोहिणी कम् अनुगच्छति | (ग) | जनकस्य |
| (iv) | सीता कम् अनुगच्छति | (घ) | सीता |
| (v) | नारीणाम् उत्तमा वधूः का | (ङ) | रामम् |

**4. सत्यम् ✓ असत्यं × वा लिखत–**

[ **सत्य ✓ या असत्य × लिखें।** Write true ✓ or false ×.]

(i) सीता रामं न अनुगता अपि तु अयोध्यायाम् एव स्थितवती। [ ]

(ii) रामे वनं गते सति सीता जनकस्य कुलं प्रस्थितवती। [ ]

(iii) सीता रामस्य दयिता आसीत् अतः केवलं सीता एव रामम् अनुगता न कोऽपि अन्यः। [ ]

(iv) रामः सीतां वनं गन्तुं निषिध्य एकाकी एव वनं प्रस्थितवान्। [ ]

(v) सीता लक्ष्मणश्च उभौ अपि रामम् अनुगतौ। [ ]

5. **यथोदाहरणं रिक्तं स्थानं पूरयत-**

[ **उदाहरण के अनुसार रिक्तस्थानों की पूर्ति करें।** Fill in the blanks as shown in the example. ]

**यथा–**

| | | | | | | |
|---|---|---|---|---|---|---|
| (i) | सीता | **नारीणाम्** उत्तमा वधूः (नार्यः) | (vi) | भरतः | | आदर्शः (भ्रातरः) |
| (ii) | मन्थरा | कुटिला (स्त्रियः) | (vii) | कौसल्या | | ज्येष्ठा (मातरः) |
| (iii) | दशरथः | दृढप्रतिज्ञः (नृपाः) | (viii) | सुमित्रा | | कनिष्ठा (मातरः) |
| (iv) | रामः | उत्तमः (पुरुषाः) | (ix) | रावणः | | बलिष्ठः (राक्षसाः) |
| (v) | लक्ष्मणः | शीघ्रकोपः (भ्रातरः) | (x) | शत्रुघ्नः | | कनिष्ठः (भ्रातरः) |

6. **उपरि लिखितानि वाक्यानि यथोदाहरणं (सप्तमी-विभक्तौ) परिवर्त्य पुनः लिखत-**

[ **उपरिलिखित वाक्यों को उदाहरण के अनुसार (सप्तमी में) परिवर्तन कर पुनः लिखें।** Rewrite the above mentioned sentences as shown in the example. ]

**यथा–** (i) सीता **नारीषु** उत्तमा वधूः (नार्यः)

(ii) ।

(iii) ।

(iv) ।

(v) ।

(vi) ।

(vii) ।

(viii) ।

(ix) ।

(x) ।

**श्लोकः**

।

पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ 28 ॥
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ 29 ॥

**पदच्छेदः**

।

पौरैः अनुगतः दूरम् पित्रा दशरथेन च ॥ 28 ॥

शृङ्गवेर-पुरे सूतं गङ्गा-कूले व्यसर्जयत् ।
गुहम् आसाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ 29 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| पौरैः | अ० पुं० तृ० बहु० | व्यसर्जयत् | वि० सृज् + णिच् - कर्तरि |
| अनुगतः | अ० पुं० प्र० एक० समस्तम् | | लङ् प्रपु० एक० |
| दूरम् | अ० नपुं० द्विती० एक० | गुहम् | अ० पुं० द्विती० एक० |
| पित्रा | ऋ० पुं० तृ० एक० | आसाद्य | ल्यबन्तम् अव्ययम् |
| दशरथेन | अ० पुं० तृ० एक० | धर्मात्मा | न्० पुं० प्र० एक० |
| शृङ्गवेरपुरे | अ० नपुं० स० एक० समस्तम् | निषादाधिपतिम् | इ० पुं० द्विती० एक० समस्तम् |
| सूतम् | अ० पुं० द्विती० एक० | प्रियम् | अ० पुं० द्विती० एक० |
| गङ्गाकूले | अ० नपुं० स० एक० समस्तम् | | |

**आकाङ्क्षा**

**अनुगतः ।**

कः अनुगतः ? धर्मात्मा (रामः) अनुगतः ।

| | |
|---|---|
| धर्मात्मा कैः अनुगतः ? | धर्मात्मा पौरैः अनुगतः। |
| पुनः सः केन अनुगतः ? | पित्रा दशरथेन अनुगतः। |
| पौरैः पित्रा दशरथेन च अनुगतः | |
| धर्मात्मा कं व्यसर्जयत् ? | पौरैः पित्रा दशरथेन च अनुगतः धर्मात्मा सूतं व्यसर्जयत्। |
| सूतं कुत्र व्यसर्जयत् ? | सूतं गङ्गाकूले व्यसर्जयत्। |
| धर्मात्मा कम् आसाद्य सूतं व्यसर्जयत्? | धर्मात्मा रामः गुहम् आसाद्य सूतं व्यसर्जयत्। |
| कीदृशं गुहम् आसाद्य ? | निषादाधिपतिं गुहम् आसाद्य। |

**अन्वयः**

पौरैः पित्रा दशरथेन च दूरम् अनुगतः धर्मात्मा (रामः) शृङ्गवेरपुरे निषादाधिपतिं प्रियं गुहम् आसाद्य गङ्गाकूले सूतं व्यसर्जयत्।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| पौरैः | नगरवासिभिः | पुरवासियों के द्वारा | by the citizens (of Ayodhyā) |
| पित्रा | जनकेन | पिता | by father |
| दशरथेन | दशरथनाम्ना नृपेण | दशरथ के द्वारा | by Daśaratha |
| दूरम् | दूरं यावत् | दूर तक | a far |
| अनुगतः | अनुसृतः | अनुसरण किया गया | followed |
| धर्मात्मा | पुण्यात्मा (रामः) | पुण्यात्मा (राम ने) | virtue-incarnate |
| शृङ्गवेरपुरे | शृङ्गवेरपुरनामके नगरे | शृङ्गवेरपुर में | at śṛṇgaverapura |
| निषादाधिपतिम् | निषादराजम् | निषादों के राजा | the chief of Niṣādas |
| प्रियम् | इष्टम् | प्रिय | beloved |
| गुहम् | गुहनामकम् | गुह को | to Guha |
| आसाद्य | प्राप्य | प्राप्त कर | having met |
| गङ्गाकूले | जाह्नवीतटे | गङ्गा के तीर पर | on the bank of Gaṅgā |
| सूतम् | सारथिम् | सारथि सुमन्त्र को | to the Charioteer |
| व्यसर्जयत् | परावर्तयत् | लौटा दिया | sent away |

**भावार्थः**

**संस्कृतम्**- निर्वासनात् परं वनं गच्छन्तं रामं दशरथः पौराः दूरं यावत् अन्वसरन्। रामः शृङ्गवेरपुरे प्रियं तत्रत्यं नृपं गुहं प्राप्य स्वसारथिं परावर्तयत्।

**हिन्दी**– वनगमन के समय पुरवासियों एवं पिता दशरथ के द्वारा बहुत दूर तक राम का अनुसरण किया गया। धर्मात्मा राम ने शृङ्गवेरपुर में निषादों के राजा तथा अत्यन्त प्रिय गुह को पाकर समीपस्थ गङ्गातट पर सूत को छोड़ दिया।

**आंग्लम्**- He was followed afar by citizens as well as by his father, Daśaratha. Meeting his beloved Guha, the chief of the Niṣādas at Śṛṇgaverpura on the bank of Gaṅgā Śrī Rāma who was virtue incarnate, accopamanied by Guha, Lakṣmaṇa and Sītā, sent away the charioteer (back to Ayodhyā).

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

पौरैरनुगतः – पौरैः + अनुगतः (विसर्ग-सन्धिः)

व्यसर्जयत् – वि + असर्जयत् (यण्-सन्धिः)

(ख) **समासः**

गङ्गाकूले – गङ्गायाः कूलम् गङ्गाकूलम् (ष० तत्पु०) तस्मिन्

धर्मात्मा – धर्मः आत्मा यस्य सः (बहुव्रीहिः)

निषादाधिपतिम् – निषादानाम् अधिपतिः निषादाधिपतिः (ष० तत्पु०) तम्

(ग) **कृदन्तौ**

आसाद्य – आ + सद् + ल्यप्

गुहः – गुह् + क

(घ) **तद्धितान्तः**

पौराः – पुर + अण् (पुरे भवाः पौराः)

(ii) **कोशः**

निषादः – निषादो मृगघाती स्यात् (वैजयन्ती-कोशः)

## अभ्यासः - 15

### (श्लोकः 28½-29)

**1. विशेषणविशेष्ये यथोचितं योजयत-**

[ **विशेषण को उचित विशेष्य से जोड़े।** Match the qualifier with appropriate qualificand. ]

| | | | |
|---|---|---|---|
| **यथा–** (i) | पित्रा | (क) | निषादाधिपतिम् |
| (ii) | प्रियम् | (ख) | दशरथेन |
| (iii) | धर्मात्मा | (ग) | सुमन्त्रम् |
| (iv) | सूतम् | (घ) | रामः |

**2. शब्दार्थौ योजयत-**

[ **शब्द को अर्थ से जोड़े।** Match the word with its meaning. ]

| | | | |
|---|---|---|---|
| **यथा–** (i) | पौरैः | (क) | अनुसृतः |
| (ii) | अनुगतः | (ख) | नगरवासिभिः |
| (iii) | आसाद्य | (ग) | तटे |
| (iv) | कूले | (घ) | संप्राप्य |
| (v) | सूतम् | (ङ) | परावर्तयत् |
| (vi) | व्यसर्जयत् | (च) | सारथिम् |

**3. प्रश्नोत्तरे योजयत-**

[ **प्रश्नों को उचित उत्तर से जोड़ें।** Match the questions with their answers. ]

| | | | |
|---|---|---|---|
| **यथा–** (i) | पौरैः पित्रा दशरथेन च कः अनुगतः ? | (क) | निषादाधिपतिं गुहम् |
| (ii) | रामः गङ्गाकूले कम् असादितवान् ? | (ख) | धर्मात्मा (रामः) |
| (iii) | रामः सूतं कुत्र व्यसर्जयत् ? | (ग) | शृङ्गवेरपुरम् |
| (iv) | निषादाधिपतिः कः ? | (घ) | गङ्गाकूले शृङ्गवेरपुरे |
| (v) | गङ्गाकूले स्थितस्य पुरस्य नाम किम् आसीत् ? | (ङ) | गुहः |

4. **असमानार्थकं शब्दं पृथक्कुरुत-**

[ **असमानार्थक शब्द को अलग करें।** Separate the unmatching word. ]

(i) पौराः, नागरिकाः, संन्यासिनः, नगरवासिनः

(ii) कूलम्, सेतुः, तटम्, तीरम्

(iii) विसर्जयति, परावर्तयति, अनुवर्तयति, निवर्तयति

(iv) आसाद्य, प्राप्य, संगम्य, परावर्त्य

(v) अश्वः, सूतः, सारथिः, यन्ता,

5. **उपरिष्टात् (प्रश्न संख्या-3) यथोचितं पदं रिक्ते स्थाने पूरयत-**

[ **उपर्युक्त (प्रश्न संख्या-3) पदों में लेकर उचित पद लेकर रिक्त स्थान भरें।** Fill in the blanks with the appropriate word given above (question no. 3). ]

(i) ये पुरे भवन्ति ते कथ्यन्ते।

(ii) ये नगरे भवन्ति ते उच्यन्ते।

(iii) ये नगरे वसन्ति ते सन्ति।

(iv) एते शब्दाः नद्या सम्बद्धस्य भूभागस्य पर्यायाः।

(v) नद्याः पारं गन्तुं नद्याः उपरि निर्मितः निर्मितिविशेषः कथ्यते।

(vi) इत्यस्य अर्थः त्यजति, इत्यस्य च अर्थः प्रतिप्रेषयति।

(vii) एते समानार्थकाः इत्यस्य अर्थः प्रतिप्रेष्य इत्यस्ति।

(viii) यः मनुष्यः रथं चालयति सः इति कथ्यते। रथादिवाहनेषु योजितः पशुविशेषः कथ्यते।

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) पौर (ख) कूल (ग) वि + सृज् + णिच् (लटि, लङि च) (घ) आसाद्य (ङ) अनुगत

**श्लोकः**

गुहेन सहितो रामो लक्ष्मणेन च सीतया ।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ 30 ॥

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।
रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ 31 ॥

देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् ।
॥ 32 ॥

**पदच्छेदः**

गुहेन सहितः रामः लक्ष्मणेन च सीतया ।
ते वनेन वनम् गत्वा नदीः तीर्त्वा बहूदकाः ॥ 30 ॥

चित्रकूटम् अनु-प्राप्य भरद्वाजस्य शासनात् ।
रम्यम् आवसथं कृत्वा रममाणाः वने त्रयः ॥ 31 ॥

देव-गन्धर्व-सङ्काशाः तत्र ते न्यवसन् सुखम् ।
॥ 32 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| गुहेन | अ० पुं० तृ० एक० | तीर्त्वा | क्त्वान्तम् अव्ययम् |
| सहितः | अ० पुं० प्र० एक० | बहूदकाः | आ० स्त्री० द्विती० बहु० |
| लक्ष्मणेन | अ० पुं० तृ० एक० | चित्रकूटम् | अ० पुं० द्विती० एक० |
| सीतया | आ० स्त्री० तृ० एक० | अनुप्राप्य | ल्यबन्तम् अव्ययम् |
| ते | तद्- द्० सर्व० पुं० प्र० बहु० | भरद्वाजस्य | अ० पुं० ष० एक० |
| वनेन | अ० नपुं० तृ० एक० | शासनात् | अ० नपुं० प्र० एक० |
| वनम् | अ० नपुं० द्विती० एक० | रम्यम् | अ० पुं० द्विती० एक० |
| गत्वा | क्त्वान्तम् अव्ययम् | आवसथम् | अ० पुं० द्विती० एक० |
| नदीः | ई० स्त्री० द्विती० बहु० | कृत्वा | क्त्वान्तम् अव्ययम् |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| रममाणाः | अ० पुं० प्र० बहु० | ते | तद्- द्० सर्व० पुं० प्र० बहु० |
| वने | अ० नपुं० स० एक० | | |
| त्रयः | त्रि- इ० पुं० प्र० बहु० | न्यवसन् | नि + वस् कर्त्तरि लङ् प्रपु० बहु० |
| देवगन्धर्वसङ्काशाः | अ० पुं० प्र० बहु० समस्तम् | | |
| तत्र | तद्धितान्तम् अव्ययम् | सुखम् | अ० नपुं० द्विती० एक० |

**आकङ्क्षा**

**न्यवसन्।**

| | |
|---|---|
| के न्यवसन् ? | ते न्यवसन्। |
| ते के ? | गुहेन लक्ष्मणेन सीतया च सहितः रामः (इति) ते त्रयः। |
| ते कथं न्यवसन् ? | ते सुखं न्यवसन्। |
| कीदृशाः ते सुखं न्यवसन् ? | देवगन्धर्वसङ्काशाः ते सुखं न्यवसन्। |
| किं कृत्वा ते सुखं न्यवसन् ? | वनेन वनं गत्वा। |
| पुनश्च किं कृत्वा ? | बहूदकाः नदीः तीर्त्वा। |
| पुनः किं कृत्वा ? | चित्रकूटम् अनुप्राप्य। |
| कस्य अनुशासनात् ? | भरद्वाजस्य अनुशासनात्। |
| ते वने किं कृत्वा सुखं न्यवसन् ? | ते वने रम्यम् आवसथं कृत्वा रममाणाः सुखं न्यवसन्। |

**अन्वयः**

गुहेन लक्ष्मणेन सीतया च सहितः रामः वनेन वनं गत्वा बहूदकाः नदीः तीर्त्वा भरद्वाजस्य शासनात् चित्रकूटमनुप्राप्य वने रम्यम् आवसथं कृत्वा देवगन्धर्वसङ्काशाः ते त्रयः रममाणाः सुखं न्यवसन्।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| गुहेन | गुह-नाम्ना निषादेन | गुह | Guha by name |
| लक्ष्मणेन | लक्ष्मण-नामकेन अनुजेन | लक्ष्मण | Lakṣmaṇa |
| सीतया च सहितः | जानक्या च सह | और सीता के साथ | and accompanied by Sītā |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| रामः | राघवः | राम | Śrī Rāma |
| वनेन | अरण्येन | वन से | from forest |
| वनम् | अरण्यम् | वन | to forest |
| गत्वा | प्राप्य | जाकर | having gone |
| बहूदकाः | गभीराः | गहरी | containing deep water |
| नदीः | सरितः | नदियों को | rivers |
| तीर्त्वा | उत्तीर्य | पार कर | having crossed |
| भरद्वाजस्य | भरद्वाज-नाम्नः ऋषेः | भरद्वाज नामक ऋषि की | of the Bharadvāja |
| शासनात् | आज्ञया | आज्ञा से | according to the instruction |
| चित्रकूटम् | चित्रकूटनामानं पर्वतम् | चित्रकूटनामक पर्वत को | Citrakūṭa (mountain) |
| अनुप्राप्य | संगम्य | प्राप्त कर | having reached |
| वने | अरण्ये | वन में | in the forest |
| रम्यम् | मनोहरम् | मनोहर | lovely |
| आवसथम् | आवासस्थानम् | पर्णशाला को | cottage |
| कृत्वा | निर्माय | (करके) निर्माण करके | having built |
| देवगन्धर्वसङ्काशाः | देव-गन्धर्व-सदृशाः | देवता और गन्धर्व के समान | like Gods and Gandharvas |
| ते त्रयः | सीतारामलक्ष्मणाः | राम लक्ष्मण सीता ने | they three (Rāma Lakṣmaṇa and Sītā) |
| रममाणाः | विहरन्तः | विहार करते हुए | sporting |
| सुखम् | सुखपूर्वकम् | सुखपूर्वक | happily |
| न्यवसन् | निवासम् अकुर्वन् | निवास किया | sojourned |

**भावार्थः**

**संस्कृतम्**- गुह-नाम्ना निषादेन, अनुजेन लक्ष्मणेन भार्यया जानक्या च सह रामः एकस्मात् वनात् अपरं वनं गत्वा गभीराः नदीः च तीर्त्वा भरद्वाजस्य ऋषेः आज्ञया चित्रकूटं प्राप्य रमणीयम् आवासं च प्रकल्प्य देवगन्धर्वसदृशः सुखं वासम् अकरोत्।

**हिन्दी**- गुह नामक निषादराज, अनुज लक्ष्मण एवं पत्नी जानकी के साथ राम एक जंगल से दूसरे जंगल जाते हुए गहरी नदियों को पार कर भरद्वाज जी की आज्ञा से चित्रकूट गए। वहाँ उन्होंने एक सुन्दर आवास बनाकर देव एवं गन्धर्वों की भाँति सुखपूर्वक निवास किया।

**आंग्लम्**- Going from forest to forest and crossing streams containing deep water, they later on reached Citrakūṭa according to the instruction of Bharadvāja and erecting a lovely cottage, the three sojourned happily there sporting in the woods like Gods and Gandharvas.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| रममाणा वने | = | रममाणाः + वने (विसर्ग-सन्धिः) |
| सहितो रामः | = | सहितः + रामः (विसर्ग-सन्धिः) |
| रामो लक्ष्मणेन | = | रामः + लक्ष्मणेन (विसर्ग-सन्धिः) |
| देवगन्धर्वसङ्काशास्तत्र | = | देवगन्धर्वसङ्काशाः + तत्र (विसर्ग-सन्धिः) |
| नदीस्तीर्त्वा | = | नदीः + तीर्त्वा (विसर्ग-सन्धिः) |
| न्यवसन् | = | नि + अवसन् (यण्-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| बहूदकाः | – | बहूनि उदकानि यासु ताः बहूदकाः (बहुव्रीहिः) (ताः बहूदकाः नदीः इत्यस्य विशेषणम्) |
| देवगन्धर्वसङ्काशाः | – | देवाश्च गन्धर्वाश्च देवगन्धर्वाः (द्वन्द्वः); देवगन्धर्वैः सङ्काशाः देवगन्धर्वसङ्काशाः (तृ० तत्पु०) {सङ्काशाः = तुल्याः} |

**(ग) कृदन्ताः**

| | | |
|---|---|---|
| गत्वा | – | गम् + क्त्वा |
| तीर्त्वा | – | तॄ + क्त्वा |
| अनुप्राप्य | – | अनु + प्र + आप् + ल्यप् |
| कृत्वा | – | कृ + क्त्वा |
| रममाणाः | – | रम् + शानच् = रममाण |
| रम्यम् | – | रम् + यत् = रम्य |

(ii) **कोशः**

| | | |
|---|---|---|
| अनु | – | पश्चात् सादृश्ययोरनु (अमरकोशः) |
| आवसथम् | – | धिष्ण्यमोको निवसनं स्थानावसथवास्तु च (अमरकोशः) |

**अवधेयम्**

(i) **क्रियाविशेषण-विषये**

(ii) **शानच्-विषये**

## अभ्यासः - 16

**(श्लोकः 30-31-32½)**

1. **विशेषणविशेष्ये यथाश्लोकं योजयत-**

[ **श्लोक के अनुसार विशेषण विशेष्य को जोड़ें।** Join the qualifier with qualificand on the basis of the verse. ]

**यथा-**

| | | | |
|---|---|---|---|
| (i) | रम्यम् | (क) | ते त्रयः |
| (ii) | सुखं | (ख) | नदीः |
| (iii) | बहूदकाः | (ग) | न्यवसन् |
| (iv) | रममाणाः | (घ) | आवसथम् |

2. **प्रश्नोत्तरं यथाश्लोकं योजयत-**

[ **श्लोक के आधार पर प्रश्न को उत्तर से जोड़ें।** Join the question with its answer on the basis of the verse. ]

| | | | |
|---|---|---|---|
| (i) | कीदृशाः राम-लक्ष्मण-सीताः वने न्यवसन् | (क) | वने |
| (ii) | रामादयः कुत्र रम्यम् आवसथं कृतवन्तः | (ख) | गुहः |
| (iii) | सीतां लक्ष्मणं च अतिरिच्य रामेण सह वने अन्यः कः आसीत् | (ग) | देवगन्धर्वसदृशाः |
| (iv) | भरद्वाजस्य शासनात् रामः कुत्र गतवान् ? | (घ) | निषादाधिपतेः |
| (v) | गुहः इति कस्य नाम आसीत् ? | (ङ) | चित्रकूटम् |

3. **शानजन्तरूपेण यथोचितं रिक्तं स्थानं पूरयत-**

[ **शानजन्त रूप से यथोचित रिक्तस्थानों की पूर्ति करें।** Fill in the blanks with the appropriate form ending with *sānac* suffix. ]

**यथा**– (i) सा लभते– **सा लभमाना**

(ii) ते राजन्ते–

(iii) एषः वन्दते–

(iv) अहं (स्त्री०) वन्दे–

(v) युवां (स्त्री०) मोदेथे–

(vi) आवां (पुं.) कूर्दावहे–

(vii) ताः याचन्ते–

(viii) चौराः पलायन्ते–

(ix) नावः प्लवन्ते–

(x) मण्डूकाः उत्प्लवन्ते–

4. **असमानार्थकं शब्दं पृथक्कुरुत-**

[ **असमानार्थक शब्द को अलग करें।** Separate the odd word. ]

(i) प्रसन्नः, सदृशः, समः, तुल्यः, सङ्काशः

(ii) विस्तृतम्, रम्यम्, रमणीयम्, सुखकरम्, मनोहरम्

(iii) शासनम्, आदेशः, अनुज्ञा, प्रणयः, अनुज्ञापनम्

(iv) आवासः, नगरम्, आवसथः, वासः

(v) बहूदका, प्रचुरजला, गभीरा, अल्पनीरा

(vi) तीर्त्वा, पारं गत्वा, उत्तीर्य, अवगाह्य

5. **यथोदाहरणं रिक्तं स्थानं पूरयत-**

[ **उदाहरण के अनुसार रिक्तस्थानों की पूर्ति करें।** Fill in the blanks as shown in the example. ]

| यथा- | (i) | रम् + यत् | = | रम्य | (iv) शक् + यत् | = |
|---|---|---|---|---|---|---|
| | (ii) | गम् + यत् | = | | (v) पद् + यत् | = |
| | (iii) | नम् + यत् | = | | | |

6. **यथोदाहरणं रिक्तं स्थानं पूरयत-**

[ **उदाहरण के अनुसार रिक्तस्थानों की पूर्ति करें।** Fill in the blanks as shown in the example. ]

| यथा- | (i) | सुखं ............ | वसति (सुख) | (vi) | पचति (सुष्ठु) |
|---|---|---|---|---|---|
| | (ii) | | हसति (मन्द) | (vii) | उच्चरति (स्पष्ट) |
| | (iii) | | चलति (शीघ्र) | (viii) | निवसति (सानन्द) |
| | (iv) | | पठति (सावधान) | (ix) | गायति (मधुर) |
| | (v) | | लिखति (स्पष्ट) | (x) | उच्चरति (तार) |

7. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) सहित (ख) तीर्त्वा (ग) रम्य (घ) रम् (लटि) (ङ) सङ्काश

**श्लोकः**

।

चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ॥ 32 ॥

राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ।

॥ 33 ॥

**पदच्छेदः**

.......................................................................... ।

चित्रकूटम् गते रामे पुत्र-शोकातुरः तथा ॥ 32 ॥

राजा दशरथः स्वर्गम् जगाम वि-लपन् सुतम् ।

॥ 33 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| चित्रकूटम् | अ० पुं० द्विती० एक० | दशरथः | अ० पुं० प्र० एक० |
| गते | अ० पुं० स० एक० | स्वर्गम् | अ० पुं० द्विती० एक० |
| रामे | अ० पुं० स० एक० | जगाम | गम्- कर्तरि लिट् प्रपु० |
| पुत्रशोकातुरः | अ० पुं० प्र० एक० समस्तम् | | एक० |
| तथा | अव्ययम् | विलपन् | विलपत्- त्० पुं० प्र० एक० |
| राजा | न्- पुं० प्र० एक० | सुतम् | अ० पुं० द्विती० एक० |

**आकाङ्क्षा**

**जगाम।**

| | |
|---|---|
| कः जगाम ? | राजा जगाम। |
| कः राजा जगाम ? | राजा दशरथः जगाम। |
| राजा दशरथः कुत्र जगाम ? | राजा दशरथः स्वर्गं जगाम। |
| कीदृशः राजा दशरथः स्वर्गं जगाम ? | पुत्रशोकातुरः राजा दशरथः स्वर्गं जगाम। |
| राजा दशरथः किं कुर्वन् स्वर्गं जगाम ? | राजा दशरथः विलपन् स्वर्गं जगाम। |
| राजा दशरथः कं विलपन् स्वर्गं जगाम ? | राजा दशरथः सुतं विलपन् स्वर्गं जगाम। |
| दशरथः कदा स्वर्गं जगाम ? | दशरथः रामे चित्रकूटं गते स्वर्गं जगाम। |

**अन्वयः**

रामे चित्रकूटं गते पुत्रशोकातुरः राजा दशरथः सुतं विलपन् स्वर्गं जगाम।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| रामे | राघवे | राम (के) | Śrī Rāma |
| चित्रकूटं गते | चित्रकूटं प्राप्ते | चित्रकूट चले जाने पर | having proceeded to Citrakūṭa |
| पुत्रशोकातुरः | पुत्रवियोगदुःखपीडितः | पुत्र शोक से व्याकुल | stricken with grief at the separation of his son |
| राजा | भूपः | राजा | Emperor |
| दशरथः | अयोध्याधिपतिः | दशरथ | Daśaratha |
| सुतं | पुत्रम् | पुत्र के लिए | son (Rāma) |
| विलपन् | रुदत् | रोते हुए | be wailing |
| स्वर्गम् | स्वर्गलोकम् | स्वर्ग | to heaven |
| जगाम | गतवान् | चला गया | ascended |

**भावार्थः**

**संस्कृतम्**— रामे चित्रकूटं प्राप्ते पुत्रवियोगम् असहमानः राजा दशरथः पुत्रार्थं विलपन् स्वर्गलोकं गतवान् ।

**हिन्दी**— राम के चित्रकूट चले जाने पर पुत्रवियोग से व्याकुल राजा दशरथ पुत्र के लिए बिलखते हुए स्वर्ग को प्रयाण कर गए।

**आंग्लम्**— Śrī Rāma having proceeded to Citrakūṭa Emperor Daśaratha forthwith ascended to heaven be wailing his son stricken as he was with grief at his separation from the son.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) कारकम्** – रामे चित्रकूटं गते (सति सप्तमी)

**(ख) समासः** – पुत्रशोकातुरः– पुत्रस्य शोकः पुत्रशोकः (ष० तत्पु०); पुत्रशोकेन आतुरः पुत्रशोकातुरः (तृ० तत्पु०)

**(ग) कृदन्तः** – विलपन्- वि + लप् + शतृ = विलपत्

| **अवधेयम्** |
|---|
| **सति सप्तम्याः विषये** |

## अभ्यासः - 17

### (श्लोकः $32^1/_2$-$33^1/_2$)

1. **यथोचितं कर्मपदं योजयत-**

[**उचित कर्मपद से जोड़ें।** Match with the appropriate object.]

| | | | |
|---|---|---|---|
| (i) | रामे गते | (क) | सुतम् |
| (ii) | विलपन् | (ख) | चित्रकूटम् |
| (iii) | जगाम | (ग) | स्वर्गम् |

2. **अन्वयं पूरयत-**

[**अन्वय को पूरा करें।** Complete the construction.]

रामे ........ गते पुत्रशोकातुरः राजा ........ सुतं ........ स्वर्गं ........ ।

3. **यथोदाहरणं वाक्यद्वयम् एकस्मिन् वाक्ये लिखत-**

[**उदाहरण के अनुसार दोनों वाक्यों को एक-एक वाक्य बनाएं।** Submerge the two sentences into one as shonw in the example.]

**वाक्यद्वयम्**— (i) रामः चित्रकूटं गतः। (तदनन्तरं) दशरथः स्वर्गं जगाम।

(ii) दशरथः स्वर्गं गतः। (अनन्तरं) वसिष्ठः भरतम् आहूतवान्।

(iii) भरतः अयोध्यां प्राप्तवान्। (अनन्तरं) दशरथस्य अन्त्येष्टिक्रिया सम्पन्ना।

(iv) रामः काञ्चनमृगम् अनुसृतवान्। (अनन्तरं) रावणः सीताम् अपाहरत्।

(v) रावणः सीताम् अपहृतवान्। (अनन्तरं) रामः इतस्ततः सीताम् अन्विष्टवान्।

(vi) रामः हनुमन्तं प्राप्तवान्। (अनन्तरं) सीतायाः अन्वेषणे बहु साहाय्यं प्राप्नोत्।

(vii) नल-नीलयोः साहाय्येन समुद्रे सेतुः निर्मितः। (अनन्तरं) रामस्य सेना लङ्कां प्राप्तवती।

(viii) रामस्य सेना लङ्कां प्राप्ता। (अनन्तरं) रामस्य पक्षतः एकः दूतः रावणं प्रति प्रेषितः।

(ix) रामस्य दूतः रावणं प्रति रामस्य सन्देशं श्रावितवान् (अनन्तरम्) अपि रावणः सीतां दातुं न इष्टवान्।

(x) रावणः मारितः। (अनन्तरं) रामः विभीषणाय लङ्काराज्यं प्रदत्तवान्।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| **एकं वाक्यम्**— | | रामः | चित्रकूटं | गतः। | (तदनन्तरं) दशरथः | स्वर्गं | जगाम। |
| | | ↓ | ↓ | ↓ | ↓ | ↓ | ↓ |
| **यथा**— | (i) | **रामे** | **चित्रकूटं** | **गते** | **दशरथः** | **स्वर्गं** | **जगाम।** |

यथा— (ii) दशरथे स्वर्गं गते वसिष्ठः भरतम् आहूतवान्। ।

(iii) ।

(iv) ।

(v) ।

(vi) ।

(vii) ।

(viii) ।

(ix) ।

(x) ।

4. **यथोदाहारणं रिक्तं स्थानं पूरयत-**

[ **उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as shown in the example. ]

यथा— (i) शोकेन आतुरः = **शोकातुरः** ।

(ii) बुभुक्षया आतुरः = ।

(iii) कामेन आतुरः = ।

(iv) क्रोधेन आतुरः = ।

5. **लिट्-लकारस्य क्रियापदं चिनुत-**

[ **लिट् लकार के क्रियापदों को चुनें।** Choose the verbal form of *liṭ lakāra*.]

| **पपाठ, गतवान्, अगच्छत्, लिलेख, चखाद, खादति, मोदते, चुकूज** |
|---|

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) वि + लप् (लटि, लङि) (ख) आतुर (ग) तथा (घ) सुत

**श्लोकः**

।

**गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ 33 ॥**

**नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।**
**स जगाम वनं वीरो रामपादप्रसादकः ॥ 34 ॥**

**पदच्छेदः**

।

गते तु तस्मिन् भरतः वसिष्ठ-प्रमुखैः द्विजैः ॥ 33 ॥

नि-युज्यमानः राज्याय न ऐच्छत् राज्यम् महा-बलः ।
सः जगाम वनम् वीरः राम-पाद-प्रसादकः ॥ 34 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| गते | अ० पुं० स० एक० | राज्यम् | अ० नपुं० द्विती० एक० |
| तु | अव्ययम् | महाबलः | अ० पुं० प्र० एक० |
| तस्मिन् | तद्- द्० सर्व० स० एक० | | समस्तम् |
| भरतः | अ० पुं० प्र० एक० | सः | तद्- द्० सर्व० प्र० एक० |
| वसिष्ठप्रमुखैः | अ० पुं० तृ० बहु० समस्तम् | जगाम | गम्- कर्तरि लिट् प्रपु० एक० |
| द्विजैः | अ० पुं० तृ० बहु० | वनम् | अ० नपुं० द्विती० एक० |
| नियुज्यमानः | अ० पुं० प्र० एक० | वीरः | अ० पुं० प्र० एक० |
| राज्याय | अ० नपुं० च० एक० | रामपादप्रसादकः | अ० पुं० प्र० एक० |
| न | अव्ययम् | | समस्तम् |
| ऐच्छत् | इष्- कर्तरि लङ् प्रपु० एक० | | |

**आकाङ्क्षा**

**न ऐच्छत् ।**

कः न ऐच्छत् ? सः (भरतः) न ऐच्छत् ।

| | |
|---|---|
| भरतः किं न ऐच्छत् ? | भरतः राज्यं न ऐच्छत्। |
| कीदृशः भरतः राज्यं न ऐच्छत् ? | महाबलः। |
| पुनः कीदृशः ? | राज्याय नियुज्यमानः। |
| भरतः कैः राज्याय नियुज्यमानः राज्यं न ऐच्छत् ? | भरतः वसिष्ठप्रमुखैः द्विजैः राज्याय नियुज्यमानः राज्यं न ऐच्छत्। |
| भरतः वसिष्ठप्रमुखैः द्विजैः कदा राज्याय नियुज्यमानः राज्यं न ऐच्छत् ? | भरतः तस्मिन् (दशरथे) गते वसिष्ठप्रमुखैः द्विजैः राज्याय नियुज्यमानः राज्यं न ऐच्छत्। |
| तर्हि सः किम् अकरोत् ? | सः जगाम। |
| सः कीदृशः ? | सः वीरः। |
| पुनश्च कीदृशः ? | रामपादप्रसादकः। |
| सः वीरः कुत्र जगाम ? | सः वीरः वनं जगाम। |

**अन्वयः**

तस्मिन् दशरथे गते तु वसिष्ठप्रमुखैः द्विजैः राज्याय नियुज्यमानः महाबलः भरतः राज्यं न ऐच्छत् (किन्तु) रामपादप्रसादकः सः वीरः वनं जगाम।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| तस्मिन् गते | दशरथे (स्वर्गं) प्राप्ते | उस (राजा दशरथ) के चले जाने पर | after the king departed for heaven |
| वसिष्ठप्रमुखैः | वसिष्ठ-प्रधानैः | वसिष्ठ की प्रधानता वाले | headed by the sage Vaśiṣṭha etc. |
| द्विजैः | विप्रैः | ब्राम्हणों के द्वारा | by the Brāhmaṇas |
| राज्याय | राजसिंहासनाय | राजसिंहासन के लिए | to accept the throne |
| नियुज्यमानः | आदिश्यमानः | नियुक्त किया जाता हुआ | being urged |
| महाबलः | शक्तिशाली | शक्तिसम्पन्न | very powerful |
| भरतः | कैकेयीपुत्रः | भरत | Bharata |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| राज्यम् | राजसिंहासनम् | राजसिंहासन को | the Kingdom (throne) |
| न | न | नहीं | (did) not |
| ऐच्छत् | अवाञ्छत् | चाहा | covet |
| तु | अपि तु | किन्तु | but |
| रामपादप्रसादकः | रामचरणानुरञ्जकः | राम चरण को प्रसन्न करने के लिए | in order to please the venerable Rāma |
| सः | भरतः | वह (भरत) | he (Bharata) |
| वीरः | पराक्रमी | वीर | the hero |
| वनम् | काननम् | वन | forest |
| जगाम | गतवान् | गया | proceeded |

**भावार्थः**

**संस्कृतम्**– दशरथे स्वर्गं गते वसिष्ठप्रधानैः ब्राह्मणैः राजसिंहासनाय अनुमोदितोऽपि महापराक्रमी भरतः राज्यं न ऐच्छत् अपि तु सः वीरः रामं प्रसादयितुं वनम् अगच्छत्।

**हिन्दी**– राजा दशरथ के स्वर्ग चले जाने पर वसिष्ठ प्रधान ब्राह्मणों के द्वारा राजसिंहासन पर नियुक्त किए जाने पर भी महापराक्रमी भरत ने राज्य को नहीं चाहा, (अपि तु) राम को प्रसन्न करने के लिए वन चले गए।

**आंग्लम्**– Though being urged to accept throne by the Brāhmaṇas headed by sage Vasiṣṭha on the king having departed (to the other world) Bharata who was very powerful, did not covet the throne. He proceeded to the forest in order to please the venerable Rāma.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

प्रमुखैर्द्विजैः – प्रमुखैः + द्विजैः (विसर्ग-सन्धिः)

नियुज्यमानो राज्याय – नियुज्यमानः + राज्याय (विसर्ग-सन्धिः)

नैच्छत् – न + ऐच्छत् (वृद्धि-सन्धिः)

वीरो रामपादप्रसादकः – वीरः + रामपादप्रसादकः (विसर्ग-सन्धिः)

**(ख) समासः**

वसिष्ठप्रमुखैः – वसिष्ठः प्रमुखः येषां ते वसिष्ठप्रमुखाः (बहुव्रीहिः) तैः वसिष्ठप्रमुखैः

रामपादप्रसादकः – रामस्य पादौ रामपादौ (ष० तत्पु०); रामपादयोः प्रसादकः रामपादप्रसादकः (ष० तत्पु०)

महाबलः – महद् बलं यस्य सः महाबलः (बहुव्रीहिः)

**(ग) कृदन्तौ**

प्रसादकः – प्रसादयति इति प्रसादकः (ण्वुल्)

नियुज्यमानः – नि + युज् + (य) + शानच् (कर्मणि)

**(घ) कारकम्**

राज्याय – राज्यं कर्तुम् ("क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी)

**अवधेयम्**

**कर्मणि शानचः विषये**

## अभ्यासः – 18

### (श्लोकः 33$\frac{1}{2}$–34)

**1. विशेषणं-विशेष्येण योजयत–**

[ **विशेषण को विशेष्य से जोड़ें।** Join the qualifier with the qualificand. ]

**यथा–**

**2. उचितेन कर्मपदेन योजयत-**

[ **उचित कर्मपद से जोड़ें।** Join with the appropriate object. ]

| **यथा**– | | |
|---|---|---|
| (i) | दशरथे गते | (क) वनम् |
| (ii) | भरतः जगाम | (ख) राज्यम् |
| (iii) | भरतः न ऐच्छत् | (ग) स्वर्गम् |
| (iv) | प्रसादकः | (घ) रामपादयोः |

**3. यथोदाहरणं वाक्यानि परिवर्तयत।**

[ **उदाहरण के अनुसार वाक्यों को बदलें।** Change the sentneces as shown in the exmaple. ]

**यथा**– (i) वसिष्ठ-प्रमुखैः द्विजैः राज्याय भरतः <u>नियोज्यते</u> – वसिष्ठ-प्रमुखैः द्विजैः राज्याय **नियुज्यमानः** भरतः

| | | | |
|---|---|---|---|
| (ii) | शिष्यैः वेदाः <u>पठ्यन्ते</u> | – शिष्यैः ........................ | वेदाः |
| (iii) | आचार्यैः शिष्याः <u>उपदिश्यन्ते</u> | – आचार्यैः | शिष्याः |
| (iv) | भक्तैः विष्णुः <u>अर्च्यते</u> | – भक्तैः | विष्णुः |
| (v) | विद्यार्थिभिः सरस्वती <u>स्तूयते</u> | – विद्यार्थिभिः | सरस्वती |
| (vi) | सीता रामेण <u>परिणीयते</u>। | – रामेण | सीता |
| (vii) | गीता सर्वैः <u>गीयते</u>। | – सर्वैः | गीता |
| (viii) | राष्ट्रं शस्त्रेण <u>रक्ष्यते</u>। | – शस्त्रेण | राष्ट्रम् |
| (ix) | विष्णुः लक्ष्म्या <u>सेव्यते</u>। | – लक्ष्म्या | विष्णुः |
| (x) | शिवेन जगत् <u>संह्रियते</u>। | – शिवेन | जगत् |

**4. प्रश्नोत्तरं यथोचितं योजयत-**

[ **प्रश्नों को उचित उत्तर से जोड़ें।** Join the question with appropriate answers. ]

| **यथा**– | | |
|---|---|---|
| (i) | द्विजेषु प्रमुखः कः ? | (क) भरतः |
| (ii) | भरतः किं न ऐच्छत् ? | (ख) वनम् |
| (iii) | रामपादप्रसादकः कः ? | (ग) वसिष्ठः |
| (iv) | भरतः कुत्र जगाम ? | (घ) राज्यम् |
| (v) | भरतः किमर्थं वनं जगाम ? | (ङ) राज्याय |
| (vi) | भरतः कस्मै नियुज्यमानः ? | (च) रामं प्रसादयितुम् |

**5. यथोचितं योजयत-**

**[ सही विवरण से जोड़ें।** Match with appropriate analysis. ]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | नियुज्यमानः | (क) | कर्तरि लङ् प्रपु० एक० |
| (ii) | ऐच्छत् | (ख) | कर्तरि लिट् प्रपु० एक० |
| (iii) | वसिष्ठप्रमुखैः | (ग) | कर्मणि शानजन्तं रूपम् |
| (iv) | तस्मिन् गते | (घ) | सति सप्तमी |
| (v) | जगाम | (ङ) | बहुव्रीहिः |

**6. अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

**[ दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) नि + युज् (कर्तरि लटि, कर्मणि शानचि) (ख) इष् (इच्छायां कर्तरि लङि) (ग) वीर (घ) प्रसादक

..........................................................................................................................

**श्लोकः**

गत्वा तु स महात्मानं रामं सत्यपराक्रमम्।
अयाचद् भ्रातरं राममार्यभावपुरस्कृतः ॥ 35 ॥

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत्।
॥ 36 ॥

**पदच्छेदः**

गत्वा तु सः महात्मानम् रामम् सत्य-पराक्रमम्।
अयाचत् भ्रातरम् रामम् आर्य-भाव-पुरस्कृतः ॥ 35 ॥

त्वम् एव राजा धर्म-ज्ञः इति रामम् वचः अब्रवीत्।
........................ ...... ................................................... ॥ 36 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| गत्वा | क्त्वान्तम् अव्ययम् | रामम् | अ० पुं० द्विती० एक० |
| | | आर्यभावपुरस्कृतः | अ० पुं० प्र० एक० समस्तम् |
| तु | अव्ययम् | त्वम् | युष्मद्- सर्व० प्र० एक० |
| सः | तद्- द्० सर्व० पुं० प्र० एक० | एव | अव्ययम् |
| महात्मानम् | न्० पुं० द्विती० एक० समस्तम् | राजा | राजन्- न्० पुं० प्र० एक० |
| | | धर्मज्ञः | अ० पुं० प्र० एक० समस्तम् |
| रामम् | अ० पुं० द्विती० एक० | इति | अव्ययम् |
| अयाचत् | याच्- कर्तरि लङ् प्रपु० एक० | रामम् | अ० पुं० द्विती० एक० |
| | | वचः | वचस्- स्० नपुं० द्विती० एक० |
| भ्रातरम् | भ्रातृ- ऋ० पुं० द्विती० एक० | | |
| | | अब्रवीत् | ब्रू- कर्तरि लङ् प्रपु० एक० |

**आकाङ्क्षा**

**अयाचत्।**

कः अयाचत् ? — सः (भरतः) अयाचत्।

सः कीदृशः ? — सः आर्यभावपुरस्कृतः।

| | |
|---|---|
| सः कम् अयाचत् ? | सः रामम् अयाचत्। |
| सः कीदृशं रामम् अयाचत् ? | सः महात्मानं रामम् अयाचत्। |
| पुनः कीदृशं रामम् ? | सत्यपराक्रमं रामम्। |
| पुनः कीदृशं रामम् ? | भ्रातरं रामम्। |
| किं कृत्वा रामम् अयाचत् ? | सः (चित्रकूटं) गत्वा रामम् अयाचत्। |

**सः अब्रवीत्।**

| | |
|---|---|
| सः कम् अब्रवीत् ? | सः रामम् अब्रवीत्। |
| सः रामं किम् अब्रवीत् ? | सः रामं वचः अब्रवीत्। |
| सः रामं किं वचः अब्रवीत् ? | सः रामं 'त्वमेव राजा धर्मज्ञः' इति वचः अब्रवीत्। |

**अन्वयः**

आर्यभावपुरस्कृतः सः (भरतः) गत्वा महात्मानं सत्यपराक्रमं भ्रातरं रामम् अयाचत्। त्वम् एव राजा धर्मज्ञः इति वचः रामम् अब्रवीत्।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| आर्यभावपुरस्कृतः | उत्तमगुणसम्पन्नः | उच्चगुण सम्पन्न | Rich in noble sentiment |
| सः | भरतः | भरत | Bharata |
| गत्वा | प्राप्य | जा कर | having approached |
| महात्मानम् | महान्तम् | महात्मा | high souled |
| सत्यपराक्रमम् | अमोघविक्रमम् | सत्य पराक्रम वाले | having unfailing prowess |
| भ्रातरम् | अग्रजम् | भ्राता | brother |
| रामम् | राघवम् | श्रीराम (से) | Śrī Rāma |
| अयाचत् | याचितवान् | माँगा | implored |
| त्वम् | त्वम् | तुम | you |
| एव | एव | ही | alone |
| धर्मज्ञः | धर्मतत्त्ववेत्ता | धर्म के ज्ञाता | knower of right deed |
| राजा | नृपः | राजा | the ruler (King) |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| इति | एवम् | ऐसा | thus |
| वचः | वचनम् | वचन | (following) words |
| रामम् | राघवम् | राम (से) | to Rāma |
| अब्रवीत् | अकथयत् | कहा | spoke out |

**भावार्थः**

**संस्कृतम्**— उत्कृष्टैः आदर्शगुणैः सम्पन्नः भरतः (चित्रकूटं) गत्वा महान्तं अमोघपराक्रमम् भ्रातरं रामम् अयोध्या-प्रतिनिवर्तनं न्यवेदयत्। हे राम ! त्वम् एव अयोध्यायाः धर्मतत्त्वज्ञः नृपतिः इति वाक्यं च रामाय उक्तवान्।

**हिन्दी**— उच्च आदर्श गुणों से युक्त भरत ने चित्रकूट जाकर श्री राम से अयोध्या वापस चलने की प्रार्थना की एवं 'आप ही राजा हैं, धर्म के ज्ञाता हैं', ऐसा वचन श्रीराम से कहा।

**आंग्लम्**— Approaching the high souled Rāma of unfailing prowess, Bharata rich in noble sentiment actually implored his elder brother Śrī Rāma. He addressed the following words to Śri Rāma- "Let you alone be the ruler since you know what is right.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

अयाचद् भ्रातरम् – अयाचत् + भ्रातरम् (जश्त्व-सन्धिः)
धर्मज्ञ इति – धर्मज्ञः + इति (विसर्ग-सन्धिः)
वचोऽब्रवीत् – वचः + अब्रवीत् (विसर्ग-सन्धिः)

**(ख) समासः**

महात्मानम् – महान् आत्मा यस्य सः महात्मा (बहुव्रीहिः) तं महात्मानम्
सत्यपराक्रमम् – सत्यः पराक्रमः यस्य सः सत्यपराक्रमः (बहुव्रीहिः) तं सत्यपराक्रमम्
आर्यभावपुरस्कृतः – आर्यस्य भावः आर्यभावः (ष० तत्पु०); आर्यभावः पुरस्कृतः येन सः आर्यभावपुरस्कृतः (बहुव्रीहिः)

**अवधेयम्**

**द्विकर्मप्रयोगविषये**

## अभ्यासः - 19

### (श्लोकः 35-36½)

1. **यथोचितं योजयत-**

   [ **उचित पद से जोड़ें।** Join with the appropriate word. ]

| | | | |
|---|---|---|---|
| (i) | भ्रातरम् | (क) | स्० नपुं० द्वितीo एक० |
| (ii) | महात्मानम् | (ख) | अ० पुं० द्विती० एक० |
| (iii) | सत्यपराक्रमम् | (ग) | ऋ० पुं० द्विती० एक० |
| (iv) | वचः | (घ) | न्० पुं० द्विती० एक० |
| (v) | राजा | (घ) | न्० पुं० प्र० एक० |

2. **प्रश्नोत्तरं यथोचितं योजयत-**

   [ **प्रश्न को उचित उत्तर से जोड़ें।** Join with the appropriate answer. ]

| | | | |
|---|---|---|---|
| (i) | कः रामम् अयाचत् ? | (क) | रामम् |
| (ii) | "त्वमेव राजा धर्मज्ञः" इति वचनं कस्य कृते उद्दिष्टम् अस्ति ? | (ख) | भरतस्य |
| (iii) | आर्यभावपुरस्कृतः इति कस्य विशेषणम् ? | (ग) | रामस्य कृते |
| (iv) | भरतः कं भ्रातरम् अयाचत् ? | (घ) | सः (भरतः) |

3. **यथाश्लोकम् अन्वयं पूरयत-**

   [ **श्लोक के अनुसार अन्वय पूरा करें।** Complete the construction according to the verse. ]

   सः ..................गत्वा.................................. रामम्

   अयाचत्। त्वम् एव                                    इति वचः रामम् अब्रवीत्।

4. **कर्मपदं यथाश्लोकं योजयत-**

   [ **श्लोक के अनुसार कर्मपद जोड़ें।** Add the *karmapada* (object) on the basis of the verse. ]

| | | | |
|---|---|---|---|
| (i) | गत्वा | (क) | वचः |
| (ii) | अब्रवीत् | (ख) | महात्मानं सत्यपराक्रमं रामम् |
| (iii) | अयाचत् | (ग) | भ्रातरं रामम् |

5. **यथोदाहरणं रिक्तं स्थानं पूरयत–**
[ **उदाहरण के अनुसार रिक्तस्थान की पूर्ति करें।** Fill in the blanks as shown in the example. ]

**यथा–** (i) महान् आत्मा यस्य सः ....**महात्मा**.... तं ....**महात्मानम्**.... ।
(ii) सः सत्यपराक्रमः तं ।
(iii) धर्मं जानाति इति तं धर्मज्ञम् ।
(iv) आर्यभावः पुरस्कृतः येन सः तेन आर्यभावपुरस्कृतेन ।

6. **याच्-धातुः उभयपदी अस्ति। तस्य लङि यथोचितं रूपं पूरयत–**
[ **उभयपदी याच्-धातु के लङ् लकार में रूप पूर्ण करें।** Complete the verbal forms of the root *yāc* in *laṅ lakāra.* ]

| | याच् (लङि परस्मैपदे) | | | | याच् (लङि आत्मनेपदे) | |
|---|---|---|---|---|---|---|
| यथा– (i) | **अयाचत्** | **अयाचताम्** | **अयाचन्** | (ii) | अयाचत | अयाचेताम् |
| (ii) | | अयाचतम् | | | | |
| (iii) | | | | | अयाचे | |

7. **यथोदाहरणं रिक्तं पूरयत–**
[ **उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as shown in the example. ]

**यथा–** (i) (क) भरतः ....**रामं**.... (राम) ....**अयोध्याप्रत्यावर्तनम्**.... (अयोध्याप्रत्यावर्तन) अयाचत् ।
(ख) रावणः (सीता) (भिक्षा) अयाचत् ।
(ग) वाली (राम) (जीवन) न अयाचत् ।
(घ) कैकेयी (दशरथ) (वरद्वय) अयाचत् ।
(ङ) शबरी (भगवान्) (भक्ति) अयाचत् ।

(ii) (क) भरतः ....**रामं**.... ....**वचः**.... अब्रवीत् (राम, वचस्) ।
(ख) अंगदः अब्रवीत् (रावण, रामसन्देश) ।

(ग) सुग्रीवः अकथयत् (राम, स्वव्यथा)।

(iii) (क) हनुमान् ..........रामं.......... ..........परिचयम्...... अपृच्छत् (राम, परिचय)।

(ख) सीता अपृच्छत् (हनुमत्, परिचय)।

(ग) रामः अपृच्छत् (विभीषण, व्यथा)।

(घ) वाली स्ववधस्य अपृच्छत् (राम, हेतु)।

(ङ) रामलक्ष्मणौ अपृच्छताम् (वृक्ष वृक्ष, सीता)।

8. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत–**

[**दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) गत्वा (ख) युष्मद् (ग) वचस् (घ) ब्रू (लटि, लिटि लङि च)

**श्लोकः**

।

रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥ 36 ॥

न चैच्छत् पितुरादेशाद्राज्यं रामो महाबलः ।
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ॥ 37 ॥

**निवर्तयामास ततो भरतं भरताग्रजः ।**
**॥ 38 ॥**

**पदच्छेदः**

।

रामः अपि परमोदारः सु-मुखः सु-महा-यशाः ॥ 36 ॥

न च ऐच्छत् पितुः आदेशात् राज्यम् रामः महा-बलः ।
पादुके च अस्य राज्याय न्यासम् दत्त्वा पुनः पुनः ॥ 37 ॥

नि-वर्तयामास ततः भरतं भरताग्रजः ।
........................................................................ ॥ 38 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| रामः | अ० पुं० प्र० एक० | पितुः | पितृ- ऋ० पु० ष० एक० |
| अपि | अव्ययम् | आदेशात् | अ० पुं० प० एक० |
| परमोदारः | अ० पुं० प्र० एक० समस्तम् | राज्यम् | अ० नपुं० द्विती० एक० |
| सुमुखः | अ० पुं० प्र० एक० समस्तम् | महाबलः | अ० पुं० प्र० एक० समस्तम् |
| सुमहायशाः | स्० पुं० प्र० एक० समस्तम् | | |
| न | अव्ययम् | पादुके | आ० स्त्री० द्विती० द्वि० |
| च | अव्ययम् | अस्य | इदम्- म्० सर्व० ष० एक० |
| ऐच्छत् | इष्- कर्तरि लङ् प्रपु० एक० | राज्याय | अ० नपुं० च० एक० |
| | | न्यासम् | अ० पुं० द्विती० एक० |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| दत्त्वा | क्त्वान्तम् अव्ययम् | ततः | तद्धितान्तम् अव्ययम् |
| पुनः पुनः | पुनर्- अव्ययम् | भरतम् | अ० पुं० द्विती० एक० |
| निवर्तयामास | नि+वृत्+णिच्-कर्तरि लिट् प्रपु० एक० | भरताग्रजः | अ० पुं० प्र० एक० समस्तम् |

**आकाङ्क्षा**

**न ऐच्छत्।**

कः न ऐच्छत् ? — रामः न ऐच्छत्।
रामः किं न ऐच्छत् ? — रामः राज्यं न ऐच्छत्।
कीदृशः रामः राज्यं न ऐच्छत् ? — परमोदारः रामः राज्यं न ऐच्छत्।
पुनश्च कीदृशः ? — सुमुखः।
पुनश्च कीदृशः रामः ? — सुमहायशाः रामः।

**निवर्तयामास।**

कः निवर्तयामास ? — भरताग्रजः निवर्तयामास।
भरताग्रजः कं निवर्तयामास ? — भरताग्रजः भरतं निवर्तयामास।
कथं निवर्तयामास ? — पुनः पुनः निवर्तयामास।
किं कृत्वा पुनः पुनः निवर्तयामास ? — न्यासं दत्त्वा।
कीदृशं न्यासं दत्त्वा निवर्तयामास ? — पादुके न्यासं दत्त्वा निवर्तयामास।
किमर्थं पादुके न्यासं दत्त्वा निवर्तयामास ? — राज्याय पादुके न्यासं दत्त्वा निवर्तयामास।

**अन्वयः**

परमोदारः सुमुखः सुमहायशाः महाबलः रामः अपि पितुः आदेशात् राज्यं न ऐच्छत्। भरताग्रजः (रामः) राज्याय पादुके न्यासं दत्त्वा भरतं पुनः पुनः निवर्तयामास।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| परमोदारः | उदारचेताः | परम उदार | supreme magnanimous |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सुमुखः | शोभनाननः | सुन्दर मुख वाला | wearing a gracious aspect |
| सुमहायशाः | सुकीर्तिः | सुविख्यात | enjoying a great renown |
| महाबलः | शक्तिसम्पन्नः | महान् बली | possessed of great might |
| रामः | राघवः | राम | Śrī Rāma |
| अपि | अपि | भी | too |
| पितुः | जनकस्य | पिता के | father's |
| आदेशात् | आज्ञया | आदेश से | decree |
| राज्यम् | राजसिंहासनम् | राज्य | for the kingdom |
| न | न | न | (did) not |
| ऐच्छत् | अवाञ्छत् | चाहा | hanker |
| भरताग्रजः | भरतस्य ज्येष्ठभ्राता रामः | भरत के अग्रज | the elder brother of Bharata |
| राज्याय | राजसिंहासनाय | राज्य के लिए | to rule over the kingdom |
| पादुके | पादत्राणे | पादुका | pair of wooden sandals |
| न्यासम् | न्यासम् | धरोहर | (as his) representa-tive |
| दत्त्वा | प्रदाय | देकर | handing over |
| भरतम् | सुमित्रानन्दनम् | भरत को | to Bharata |
| पुनः पुनः | भूयः भूयः | बार बार | repeatedly |
| निवर्तयामास | प्रतिप्रेषयामास | लौटाया | persuaded (him) to return |

**भावार्थः**

**संस्कृतम्**— उदारचेताः शोभनाननः सुप्रसिद्धः महाशक्तिसम्पन्नः श्रीरामः जनकस्य आज्ञया राज्यं न ऐच्छत्। राज्याय स्वपादुके दत्त्वा भरतं भूयो भूयः अयोध्यां प्रतिप्रेषितवान्।

**हिन्दी**— परम उदार सुन्दर गुण वाले महाशक्तिसम्पन्न श्रीराम भी पिता के आदेश से राज्य नहीं चाहते थे। उन्होंने राज्य के लिए अपनी चरणपादुका भरत को सौंपकर उन्हें बार-बार अयोध्या लौट जाने के लिए कहा।

**आंग्लम्**— In difference to his father's decree Śri Rāma too, who was supremely magnanimous and enjoyed a very great renown and who always wore a gracious aspect did not hanker for the Kingdom. Handing over to Bharata his pair of wooden sandals as his representative to rule over the Kingdom, Śri Rāma, Bharata's elder brother who was possessed of great might persuaded him to return from Citrakūṭa after repeated importunities.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| रामोऽपि | – | रामः + अपि (विसर्ग-सन्धिः) |
| चैच्छत् | – | च + ऐच्छत् (वृद्धि-सन्धिः) |
| पितुरादेशात् | – | पितुः + आदेशात् (विसर्ग-सन्धिः) |
| आदेशाद्राज्यम् | – | आदेशात् + राज्यम् (जश्त्व-सन्धिः) |
| रामो महाबलः | – | रामः + महाबलः (विसर्ग-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| परमोदारः | – | परमश्चासौ उदारश्च परमोदारः (कर्मधारयः) |
| सुमुखः | – | शोभनं मुखं यस्य सः सुमुखः (बहुव्रीहिः) |
| सुमहायशाः | – | शोभनं (सु) महत् यशः यस्य सः सुमहायशाः (बहुव्रीहिः) |
| महाबलः | – | महद् बलं यस्य सः महाबलः (बहुव्रीहिः) |
| भरताग्रजः | – | भरतस्य अग्रजः (ष० तत्पु०) |

(ग) **कृदन्तः**

| | | |
|---|---|---|
| दत्त्वा | – | दा + क्त्वा |

## अभ्यासः - 20

### (श्लोकः 36½-37-38½)

1. **श्लोकानुसारं समाधत्त–**

[ **श्लोक के अनुसार उत्तर लिखें।** Answer on the basis of the verse. ]

(i) रामः किं न ऐच्छत् ? ............................................ ।

(ii) कस्य आदेशात् रामः राज्यं न ऐच्छत् ? ............................................ ।

(iii) रामः कं निवर्तयामास ? ............................................ ।

(iv) रामः राज्यार्थं भरताय किं दत्तवान् ? ............................................ ।

2. **शब्दार्थौ यथोचितं योजयत–**

[ **शब्द को उसके अर्थ से जोड़ें।** Join the word with its meaning. ]

| | | | |
|---|---|---|---|
| (i) | महाबलः | (क) | सुकीर्तिः |
| (ii) | सुमहायशाः | (ख) | शोभनाननः |
| (iii) | सुमुखः | (ग) | महापराक्रमी |
| (iv) | भरताग्रजः | (घ) | प्रतिप्रेषयाञ्चकार |
| (v) | निवर्तयामास | (घ) | भरतस्य ज्येष्ठभ्राता |

3. **असमानार्थकं पृथक्कुरुत–**

[ **असमानार्थक को अलग करें।** Separate the word having different meaning. ]

(i) निर्वतयामास, प्रतिनिवर्तयाञ्चकार, प्रतिप्रेषितवान्, प्रत्यगमयत्, प्रवर्तयामास............................................ ।

(ii) ऐच्छत्, इष्टवान्, अलभत, अवाञ्छत्, अकाङ्क्षत, अकामयत ............................................ ।

(iii) दत्त्वा, प्रदाय, समर्प्य, गृहीत्वा, अर्पयित्वा ............................................ ।

(iv) अग्रजः, ज्येष्ठः, अनुजः, अग्रजन्मा ............................................ ।

(v) न्यासः, निक्षेपः, सुखम् ............................................ ।

4. **विसन्धिं कुरुत–**

[ **विसन्धि करें।** Disjoin the euphonic combination. ]

**यथा–** (i) रामोऽपि ........**रामः + अपि**........

(ii) चैच्छत्

(iii) चास्य

(iv) पितुरादेशाद्

(v) रामो महाबलः

5. **प्रातिपदिकं लिखत—**

[ **प्रातिपदिक लिखें।** Write the nominal stem. ]

**यथा—** (i) सुमहायशाः ............**सुमहायशस्**............

(ii) पादुके

(iii) न्यासम्

(iv) अस्य

(v) आदेशाद्

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) सुमुख (ख) आदेश (ग) न्यास (घ) नि + वृत् + णिच् (लटि, लिटि लोटि च)

—

**श्लोकः**

।

स कामममनवाप्यैव रामपादावुपस्पृशन् ॥ 38 ॥

नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ।

॥ 39 ॥

**पदच्छेदः**

।

सः कामम् अनवाप्य एव राम-पादौ उप-स्पृशन् ॥ 38 ॥

नन्दि-ग्रामे अकरोत् राज्यम् राम-आगमन-काङ्क्षया ।

॥ 39 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सः | तद्- द्० सर्व० प्र० एक० | उपस्पृशन् | उपस्पृशत्-त्० पुं० प्र० एक० |
| कामम् | अ० पुं० द्विती० एक० | नन्दिग्रामे | अ० पुं० स० एक० समस्तम् |
| अनवाप्य | ल्यबन्तम् अव्ययम् समस्तम् | अकरोत् | कृ-कर्तरि लङ् प्रपु० एक० |
| एव | अव्ययम् | राज्यम् | अ० नपुं० द्विती० एक० |
| रामपादौ | अ० पुं० द्विती० द्वि० समस्तम् | रामागमनकाङ्क्षया | आ० स्त्री० तृ० एक० समस्तम् |

**आकाङ्क्षा**

**अकरोत् ।**

| | |
|---|---|
| कः अकरोत् ? | सः (भरतः) अकरोत् । |
| सः किम् अकरोत् ? | सः राज्यम् अकरोत् । |
| कीदृशः सः राज्यम् अकरोत् ? | उपस्पृशन् सः राज्यम् अकरोत् । |
| किम् उपस्पृशन् ? | रामपादौ उपस्पृशन् । |
| सः कदा अकरोत् ? | सः कामम् अनवाप्य राज्यम् अकरोत् । |

सः कुत्र राज्यम् अकरोत् ? — सः नन्दि-ग्रामे राज्यम् अकरोत् ।

सः कया काङ्क्षया नन्दिग्रामे राज्यम् अकरोत् ? — सः रामागमन-काङ्क्षया नन्दिग्रामे राज्यम् अकरोत् ।

**अन्वयः**

सः कामम् अनवाप्य रामपादौ उपस्पृशन् रामागमनकाङ्क्षया नन्दिग्रामे राज्यम् अकरोत् ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सः | भरतः | वह (भरत) | he (Bharata) |
| कामम् | रामप्रतिनिवृत्तिरूपं कामम् | मनोरथ को | (his) ambition |
| अनवाप्य | अप्राप्य | न प्राप्त कर | without realizing |
| रामपादौ | रामचरणौ | राम के चरण को | the feet (of Śrī Rāma) |
| उपस्पृशन् | नमस्कुर्वन् | नमस्कार करते हुऐ | by touching |
| रामागमनकाङ्क्षया | रामस्य पुनरागमनाभिलाषया | राम के आने की अभिलाषा से | longing for the return of Śrī Rāma |
| नन्दिग्रामे | नन्दि-नाम्नि ग्रामे | नन्दिग्राम नामक स्थान में | at Nandigrāma |
| राज्यम् अकरोत् | राज्यस्य प्रशासनं चकार | राज्य का प्रशासन किया | ruled over the kingdom |

**भावार्थः**

**संस्कृतम्**— भरतः स्वाभीष्टम् अलब्ध्वा रामचरणौ नमस्कुर्वन् रामस्य प्रत्यागमनेच्छया नन्दिग्रामे राज्यम् अकरोत् ।

**हिन्दी**— भरत अपनी इच्छा पूरी न होने पर राम चरणों को नमन करते हुए राम के अयोध्या वापस आने की कामना से नन्दिग्राम मे राज्य करने लगे।

**आंग्लम्**— Without realizing his ambition, Bharata returned to Ayodhyā, touching the feet of Śrī Rāma, longing for the return of Śrī Rāma, he ruled at Nandigrāma.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| स कामम् | – | सः + कामम् (विसर्ग-सन्धिः) |
| अनवाप्यैव | – | अनवाप्य + एव (वृद्धि-सन्धिः) |
| रामापादावुपस्पृशन् | – | रामपादौ + उपस्पृशन् (अयादि-सन्धिः) |
| नन्दिग्रामेऽकरोद् | – | नन्दिग्रामे + अकरोत् (पूर्व-रूप-सन्धिः) |
| अकरोद्राज्यम् | – | अकरोत् + राज्यम् (जश्त्व-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| रामपादौ | – | रामस्य पादौ रामपादौ (ष० तत्पु०) तौ रामपादौ |
| रामागमनकाङ्क्षया | – | रामस्य आगमनम् रामागमनम् (ष० तत्पु०); रामागमनस्य काङ्क्षा रामागमनकाङ्क्षा (ष० तत्पु०) तया रामागमन-काङ्क्षया |
| अनवाप्य | – | न अवाप्य अनवाप्य (नञ्-तत्पु०) |

---

## अभ्यासः - 21

**(श्लोकः 38½–39)**

1. **शब्दार्थौ यथोचितं योजयत–**

[ **शब्द को अर्थ से जोड़ें।** Join the word with its meaning. ]

| | | | |
|---|---|---|---|
| (i) | कामम् | (क) | अलब्ध्वा |
| (ii) | अनवाप्य | (ख) | अभीप्सितम् |
| (iii) | रामपादौ | (ग) | नमन् |
| (iv) | उपस्पृशन् | (घ) | रामचरणौ |
| (v) | काङ्क्षया | (ङ) | रामप्रत्यावर्तनस्य |
| (vi) | रामागमनस्य | (च) | इच्छया |
| (vi) | अकरोत् | (छ) | कृतवान् |

2. **उचितविकल्पेन प्रश्नान् समाधत्त–**

[ **उचित विकल्प से प्रश्न का उत्तर लिखें।** Write the answer by selecting the appropriate option. ]

(i) **भरतस्य कामः (इच्छा) कः आसीत् ?** ( )

(क) रामः वनं गच्छतु।

(ख) लक्ष्मणः सीता च वनं न गच्छताम्, केवलं रामः एव वनं गच्छतु। लक्ष्मणः सीता च अयोध्यां प्रति गच्छताम्।

(ग) रामः लक्ष्मणः सीता च अयोध्यां प्रति आगच्छन्तु। रामः राज्यं स्वीकरोतु।

(घ) रामः राज्यं कर्तुम् माम् अनुमोदयतु।

(ii) **भरतस्य प्रार्थनायाः परं रामः किं कृतवान् ?** ( )

(क) अयोध्यां प्रस्थितवान्।

(ख) लक्ष्मणम् अयोध्यां प्रेषितवान्।

(ग) भरतं राज्यं कर्तुम् आदिष्टवान्।

(घ) अयोध्यायाः राजसिंहासनम् अधिष्ठितवान्।

(iii) **रामस्य भरतं प्रति प्रतिबोधनात् परं भरतः किम् अकरोत् ?** ( )

(क) रामेण सहैव सः अपि वने एव अतिष्ठत्।

(ख) लक्ष्मणाय राज्यम् अददात्।

(ग) रामपादुके स्वीकृत्य ते एव राजसिंहासने समारोह्य नन्दिग्रामे स्थित्वा रामस्य प्रतीक्षायां राज्यं चकार।

(घ) अयोध्यां त्यक्त्वा मातुलगृहं गत्वा तत्रैव न्यवसत्।

(ङ) अयोध्यायाः राजसिंहासनम् आरुह्य आत्मानं अयोध्यानरेशम् उद्घोष्य रामस्य अपकीर्तिं कुर्वन् राज्यभोगम् अन्वभवत्।

3. **सन्धिविच्छेदं कुरुत–**

[ **सन्धिविच्छेद करें।** Disjoin the euphonic combination. ]

(i) रामापादावुपस्पृशन्

(ii) अनवाप्यैव

(iii) ततो भरतम्

(iv) नन्दिग्रामेऽकरोद्

(v) अकरोद्राज्यम्

4. **समस्तपदस्य विग्रहं लिखत–**

[ **समस्तपद का विग्रहवाक्य लिखें।** Write the analytical sentence of the compound word. ]

(i) रामागमनकाङ्क्षया

(ii) अनवाप्य

(iii) रामपादौ

5. **अयादिसन्धियुक्तं पदं पृथक्कुरुत–**

[ **अयादिसन्धियुक्त पदों को अलग करें।** Separate the word having *ayādisandhi.* ]

| **रामपादावुपस्पृशन्, तावपि, पर्यचिनोत्, नाविकः, प्रत्यर्पयत्** |
|---|

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) काम (ख) अनवाप्य (ग) उपस्पृशत् (घ) कृ (लटि, लिटि, लृटि, लङि लुङि च)

(ङ) आकाङ्क्षा

**श्लोकः**

।

**गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥ 39 ॥**

**रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।**
**तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥ 40 ॥**

**पदच्छेदः**

।

गते तु भरते श्रीमान् सत्य-सन्धः जितेन्द्रियः ॥ 39 ॥

रामः तु पुनः आ-लक्ष्य नागरस्य जनस्य च ।
तत्र आ-गमनम् एकाग्रः दण्डकान् प्र-विवेश ह ॥ 40 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| गते | अ० पुं० स० एक० | जनस्य | अ० पुं० ष० एक० |
| तु | अव्ययम् | च | अव्ययम् |
| भरते | अ० पुं० स० एक० | तत्र | तद्धितान्तम् अव्ययम् |
| श्रीमान् | श्रीमत्-त् पुं० प्र० एक० | आगमनम् | अ० नपुं० द्विती० एक० |
| सत्यसन्धः | अ० पुं० प्र० एक० समस्तम् | एकाग्रः | अ० पुं० प्र० एक० |
| जितेन्द्रियः | अ० पुं० प्र० एक० समस्तम् | दण्डकान् | अ० पुं० द्विती० बहु० |
| रामः | अ० पुं० प्र० एक० | प्रविवेश | प्र + विश्-कर्तरि लिट् प्रपु० एक० |
| तु | अव्ययम् | | |
| पुनः | पुनर्- अव्ययम् | ह | अव्ययम् |
| नागरस्य | अ० पुं० ष० एक० | | |

**आकाङ्क्षा**

**प्रविवेश।**

कः प्रविवेश ? रामः प्रविवेश ।

| | |
|---|---|
| रामः कुत्र प्रविवेश ? | रामः दण्डकान् प्रविवेश। |
| कीदृशः रामः दण्डकान् प्रविवेश ? | श्रीमान् सत्यसन्धः रामः दण्डकान् प्रविवेश। |
| पुनश्च कीदृशः रामः दण्डकान् प्रविवेश ? | जितेन्द्रियः एकाग्रश्च। |
| रामः कदा दण्डकान् प्रविवेश ? | भरते गते रामः दण्डकान् प्रविवेश। |
| रामः किम् आलक्ष्य दण्डकान् प्रविवेश ? | रामः नागरस्य जनस्य तत्र आगमनम् आलक्ष्य दण्डकान् प्रविवेश। |

**अन्वयः**

भरते गते श्रीमान् सत्यसन्धः जितेन्द्रियः एकाग्रः रामः नागरस्य जनस्य च तत्र आगमनम् पुनः आलक्ष्य दण्डकान् प्रविवेश ह।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| भरते गते | कैकेयीपुत्रे गते | भरत के चले जाने पर | when Bharata had left |
| श्रीमान् | लक्ष्मीवान् | श्रीसम्पन्न | the glorious |
| सत्यसन्धः | सत्यप्रतिज्ञः | सत्यप्रतिज्ञ | of unfailing vow |
| जितेन्द्रियः | इन्द्रियविजयी | जितेन्द्रिय | conquerer of sense organs |
| एकाग्रः | नियतचित्तवृत्तिः | एकाग्र चित्तवाले | intent on one object |
| रामः | दशरथस्य ज्येष्ठः पुत्रः | राम | Rāma (the son of Daśaratha) |
| नागरस्य | नगरनिवासिनः | नगरनिवासी | living in the city |
| जनस्य | लोकस्य | लोगों के | of the people |
| तत्र | तस्मिन् | चित्रकूट पर्वत पर | in *Citrakūṭa*-mountain |
| आगमनम् | प्राप्तिं | आगमन | visit |
| पुनः | भूयः | पुनः | the renewed |
| आलक्ष्य | आशङ्क्य | विचार कर | anticipating |
| दण्डकान् | दण्डकवनानि | दण्डक नाम के वन में | to *Daṇḍakāraṇya* |
| प्रविवेश | प्राविशत् | प्रवेश कर गये | entered |

**भावार्थः**

**संस्कृतम्**— भरते अयोध्यां प्रति प्रस्थिते सत्यप्रतिज्ञः इन्द्रियविजयी नियतचेताः श्रीरामः नागरिकाणाम् अन्येषां च जनानां चित्रकूटं प्रति आगमनम् आशङ्क्य दण्डकवनं प्रविष्टवान्।

**हिन्दी**— भरत के अयोध्या लौट जाने पर श्री राम चित्रकूट में नागरिकों एवं अन्य जनों के पुनः आने की आशङ्का से दण्डक वन में प्रवेश किया।

**आंग्लम्**— When Bharata, however, had left, the glorious Rāma of unfailing vow, who had conquered his senses and was intent on one object, entered the Daṇḍaka forest, anticipating the renewed visit of the people of Ayodhyā to that region.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

रामस्तु – रामः + तु (विसर्ग-सन्धिः)

पुनरालक्ष्य – पुनः + आलक्ष्य (विसर्ग-सन्धिः)

तत्रागमनम् – तत्र + आगमनम् (दीर्घ-सन्धिः)

(ख) **समासः**

सत्यसन्धः – सत्या सन्धा यस्य सः सत्यसन्धः (बहुव्रीहिः)

जितेन्द्रियः – जितानि इन्द्रियाणि येन सः जितेन्द्रियः (बहुव्रीहिः)

(ग) **तद्धितान्तः**

नागरः – नगरे भवः नगर + अण् ('तत्र भवः' इति सूत्रेण)

(ii) **कोशः**

सन्धा – सन्धा प्रतिज्ञा मर्यादा (अमरकोशः)

---

## अभ्यासः - 22

**(श्लोकः $39^1/_2$-40)**

1. **प्रश्नान् समाधत्त—**

[ **प्रश्नों के उत्तर लिखें।** Write answers to the following questions. ]

(i) रामः नागरस्य जनस्य च कुत्र आगमनम् आलिक्षतवान् ? ।

(ii) रामः चित्रकूटतः कुत्र प्रविवेश ? ........................................ ।

(iii) रामः कस्मिन् गते दण्डकान् प्राविशत् ?........................................ ।

(iv) भरतः रामं मिलित्वा कुत्र गतः ? ।

2. **शब्दार्थौ मेलयत–**

[ **शब्द को अर्थ से जोड़ें।** Join the word with its meaning. ]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | सत्यसन्धः | (क) | आशङ्क्य |
| (ii) | आलक्ष्य | (ख) | नियतमनाः |
| (iii) | प्रविवेश | (ग) | सत्यप्रतिज्ञः |
| (iv) | एकाग्रः | (घ) | प्राविशत् |
| (v) | नागरस्य | (ग) | नगरवासिनः |

3. **असमानार्थकं पृथक्कुरुत–**

[ **असमानार्थक को पृथक् करें।** Separate the odd one. ]

(i) श्रीमान्, श्रीसम्पन्नः, लक्ष्मीवान्, शोभावान्, बलवान् ।

(ii) सत्यसन्धः, सत्यप्रतिज्ञः, सत्यवचनः, मधुरवचनः ।

4. **कर्तृपदं यथोचितं योजयत–**

[ **उचित कर्तृपद से जोड़ें।** Match with the word standing for the agent. ]

| | | | |
|---|---|---|---|
| (i) | आगमनम् | (क) | नागरस्य जनस्य (च) |
| (ii) | गते | (ख) | भरते |
| (iii) | प्रविवेश | (ग) | रामः |

5. **ल्यबन्तं पदं पृथक्कृत्य तेषां प्रयोगेण वाक्यानि पृथक् पत्रे रचयत–**

[ **ल्यबन्त पद को अलग करें एवं उनका प्रयोग करते हुए कुछ वाक्य बनाएँ।** Separate the word ending with *lyap* suffix and make sentences using them. ]

| **आलक्ष्य, त्यक्त्वा, अलब्ध्वा, विश्रम्य, खादन्, श्रुत्वा, आकर्ण्य, विरम्य, कर्तुम्, भोक्तव्यम्** |
|---|

**श्लोकः**

**प्रविश्य तु महारण्यं रामो राजीवलोचनः।**
**विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह॥ 41॥**

**सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा।**
**॥ 42॥**

**पदच्छेदः**

प्र-विश्य तु महारण्यम् रामः राजीव-लोचनः।
विराधम् राक्षसम् हत्वा शरभङ्गम् ददर्श ह॥ 41॥

सुतीक्ष्णम् च अपि अगस्त्यम् च अगस्त्य-भ्रातरम् तथा।
॥ 42॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| प्रविश्य | ल्यबन्तम् अव्ययम् | शरभङ्गम् | अ० पुं० द्विती० एक० |
| तु | अव्ययम् | ददर्श | दृश् कर्तरि लिट् प्रपु० एक० |
| महारण्यम् | अ० नपुं० द्विती० एक० | ह | अव्ययम् |
| | समस्तम् | सुतीक्ष्णम् | अ० पुं० द्विती० एक० |
| रामः | अ० पुं० प्र० एक० | च | अव्ययम् |
| राजीव-लोचनः | अ० पुं० प्र० एक० समस्तम् | अपि | अव्ययम् |
| विराधम् | अ० पुं० द्विती० एक० | अगस्त्यम् | अ० पुं० द्विती० एक० |
| राक्षसम् | अ० पुं० द्विती० एक० | च | अव्ययम् |
| हत्वा | क्त्वान्तम् अव्ययम् | तथा | तद्धितान्तम् अव्ययम् |

**आकाङ्क्षा**

**ददर्श।**

कः ददर्श ? रामः ददर्श।

कीदृशः रामः ददर्श ? राजीवलोचनः रामः ददर्श।

| | |
|---|---|
| रामः कं ददर्श ? | रामः शरभङ्गं ददर्श। |
| पुनश्च कं ददर्श ? | सुतीक्ष्णम् अगस्त्यं तथा च अगस्त्यभ्रातरं ददर्श। |
| कुत्र प्रविश्य ददर्श ? | महारण्यं प्रविश्य ददर्श। |
| किं कृत्वा ददर्श ? | हत्वा ददर्श। |
| कं हत्वा ददर्श ? | विराधं राक्षसं हत्वा ददर्श। |

**अन्वयः**

राजीवलोचनः रामः महारण्यं प्रविश्य विराधं राक्षसं हत्वा शरभङ्गं सुतीक्ष्णम् अगस्त्यं तथा च अगस्त्यभ्रातरं ददर्श ह।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| राजीवलोचनः | कमलनयनः | कमल जैसे नेत्रों वाला | Lotus-eyed |
| रामः | राघवः | राम | Rāma |
| महारण्यम् | बृहत् काननम् | विशाल वन (में) | Great forest |
| प्रविश्य | गत्वा | प्रवेश कर | having entered |
| तु | तथा च | और | and |
| राक्षसम् | असुरम् | राक्षस | demon |
| विराधम् | विराधाख्यम् | विराध को | Virādha |
| हत्वा | मारयित्वा | मारकर | having killed |
| शरभङ्गम् | शरभङ्गाख्यम् ऋषिम् | शरभङ्ग नामक ऋषि को | a sage called Śara-bhaṇga |
| सुतीक्ष्णम् | सुतीक्ष्णाभिधम् | सुतीक्ष्ण को | sutikṣṇa by name |
| अगस्त्यम् | अगस्त्यनामानम् | अगस्त्य को | Agastya by name |
| तथा च | एवं च | और | and |
| अगस्त्यभ्रातरम् | अगस्त्यसहोदरम् | अगस्त्य के भ्राता को | to Agastya's brother |
| ददर्श | दृष्टवान् | देखा | saw |
| ह | नूनम् | निश्चय ही | of course |

**भावार्थः**

**संस्कृतम्**— राजीवसदृशलोचनः रामः महारण्यं प्रविश्य विराधाख्यं राक्षसं मारयित्वा शरभङ्गाख्यम् ऋषिं सुतीक्ष्णम्, अगस्त्यम्, अगस्त्यभ्रातरं च अपश्यत्।

**हिन्दी**— लाल कमल जैसे नेत्रों वाले राम ने महारण्य में प्रवेश कर विराधनामक राक्षस को मारकर शरभङ्ग सुतीक्ष्ण, अगस्त्य एवं अगस्त्य के भ्राता को देखा।

**आंग्लम्**— Entering the great forest (of Daṇḍaka) and having despatched the ogre Virādha the lotus-eyed Rāma saw one after another the sages of Śarabhaṅga and sutīkṣṇa as well as Agastya and his brother.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| रामो राजीवलोचनः | – | रामः + राजीवलोचनः (विसर्ग-सन्धिः) |
| चाप्यगस्त्यम् | – | च + अपि + अगस्त्यम् |
| | | **(दीर्घ-सन्धिः) (यण्-सन्धिः)** |

(ख) **समासः**

| | | |
|---|---|---|
| महारण्यम् | – | महत् च तद् अरण्यं महारण्यम् (कर्मधारयः) |
| राजीवलोचनः | – | राजीवे इव लोचने यस्य सः राजीवलोचनः (बहुव्रीहिः) |
| अगस्त्यभ्रातरम् | – | अगस्त्यस्य भ्राता अगस्त्य-भ्राता (ष० तत्पु०) तम् अगस्त्य-भ्रातरम् |

(ग) **कृदन्ताः**

| | | |
|---|---|---|
| प्रविश्य | – | प्र + विश् + ल्यप् |
| हत्वा | – | हन् + क्त्वा |

## अभ्यासः - 23

### (श्लोकः 41-42½)

1. **अधोलिखित-पदानां परिचयं लिखत-**

[ **अधोलिखित पदों का परिचय लिखें।** Identify the following words. ]

यथा- (क) प्रविश्य ..... **प्र + विश् + ल्यप् (ल्यबन्तमव्ययम्)**

(ख) ददर्श

(ग) अगस्त्यभ्रातरम्

(घ) ह

(ङ) हत्वा

(च) राजीवलोचनः

2. **श्लोकानुसारम् उत्तरं लिखत-**

[ **श्लोक के अनुसार उत्तर लिखें।** Answer the questions on the basis of the verse. ]

(क) कः महारण्यं प्रविष्टवान् ? ..................... ।

(ख) रामः कीदृशः आसीत् ? ..................... ।

(ग) रामः कुत्र प्रविश्य शरभङ्गं ददर्श ? ..................... ।

(घ) रामः कं हत्वा शरभङ्गं ददर्श ? ।

(ङ) रामः अन्यं कं कं ददर्श ? ..................... ।

3. **सत्यम् ✓ असत्यं × वा निर्दिशत-**

[ **सत्य ✓ या असत्य × बताएँ।** Mention right ✓ or wrong ×. ]

(क) रामः रावणं हत्वा शरभङ्गं ददर्श। ☐

(ख) रामः महारण्यं प्रविश्य शरभङ्गं ददर्श। ☐

(ग) रामः वसिष्ठं वसिष्ठभ्रातरं च ददर्श। ☐

(घ) राजीवलोचनस्य अर्थः पङ्कजलोचनः। ☐

(ङ) सुतीक्ष्णः कश्चन ऋषिः आसीत्। ☐

4. **अन्वयं पूरयत—**

**[ अन्वय पूरा करें।** Complete the construction. ]

राजीवलोचनः .................................................. प्रविश्य हत्वा शरभङ्गं

अगस्त्यं अगस्त्यभ्रातरम् ह।

5. **उदाहरणानुसारं रिक्तस्थानं पूरयत—**

**[ उदाहरण के अनुसार रिक्तस्थान की पूर्त्ति करें।** Fill in the blanks as shown in the example. ]

**यथा—** (क) प्रविश्य ........**प्र + विश् + ल्यप्**........

(ख) विलोक्य

(ग) आनीय

(घ) निशम्य

(ङ) सम्प्रेष्य

(च) आकर्ण्य

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत—**

**[ दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) राजीव (ख) लोचन (ग) हन् (लटि, लृटि, लङि) (घ) दृश् (लिटि, लुङि च)

**श्लोकः**

।

**अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ॥ 42 ॥**

**खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ।**

**॥ 43 ॥**

**पदच्छेदः**

।

अगस्त्य-वचनात् च एव जग्राह ऐन्द्रम् शरासनम् ॥ 42 ॥

खड्गं च परम-प्रीतः तूणी च अक्षय-सायकौ ।

॥ 43 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| अगस्त्य-वचनात् | अ० नपुं० प० एक० समस्तम् | खड्गम् | अ० पुं० द्वि.० एक० |
| | | परम-प्रीतः | अ० पुं० प्र० एक० समस्तम् |
| जग्राह | ग्रह्- कर्तरि लिट् प्रपु० एक० | | |
| ऐन्द्रम् | अ० नपुं० द्विती० एक० | तूणी | इ० पुं० द्विती० द्वि० |
| शरासनम् | अ० नपुं० द्विती० एक० समस्तम् | अक्षय-सायकौ | अ० पुं० द्विती० द्वि० समस्तम् |

**आकाङ्क्षा**

**(रामः) जग्राह।**

| | |
|---|---|
| कीदृशः (रामः) जग्राह ? | परमप्रीतः (रामः) जग्राह। |
| किं जग्राह ? | शरासनं जग्राह। |
| कीदृशं शरासनं जग्राह ? | ऐन्द्रं शरासनं जग्राह। |
| पुनः किं जग्राह ? | खड्गं जग्राह। |
| पुनश्च किं जग्राह ? | तूणी जग्राह। |
| कीदृशौ तूणी जग्राह ? | **अक्षयसायकौ** तूणी **जग्राह**। ? |

**अन्वयः**

परमप्रीतः (रामः) अगस्त्यवचनात् ऐन्द्रं शरासनं खड्गम् अक्षयसायकौ तूणी च जग्राह।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| परमप्रीतः | अत्यन्तं प्रसन्नः | अत्यधिक प्रसन्न | with suprem delight |
| अगस्त्यवचनात् | अगस्त्यकथनात् | अगस्त्य के कहने से | at the instance of Agastya |
| ऐन्द्रम् | इन्द्रेण प्रदत्तम् | इन्द्र के द्वारा प्रदत्त | bestowed by Indra |
| शरासनम् | धनुः | धनुष को | a bow |
| खड्गम् | कृपाणम् | तलवार को | a sword |
| अक्षयसायकौ | नाशरहितबाणौ | विनाश रहित बाणों वाले | containing inex-haustible store of arrows |
| तूणी | निषङ्गौ | निषङ्गों को | a pair of quivers |
| जग्राह | अग्रहीत् | लिया | accepted |

**भावार्थः**

**संस्कृतम्**– अत्यन्तं प्रसन्नः श्रीरामः अगस्त्यस्य आज्ञया इन्द्रेण प्रदत्तं धनुः अपि च कृपाणं नाशरहितबाणवाहकौ तूणी च अग्रहीत्।

**हिन्दी**– अत्यन्त प्रसन्न श्रीराम ने अगस्त्य की आज्ञा से इन्द्र के द्वारा प्रदान किए गए धनुष को तथा तलवार एवं नाशरहित बाणों के वाहक दो तूणीरों को लिया।

**आंग्लम्**– At the instance of Agastya himself he accepted with supreme delight a bow, a sword, a pair of quivers containing an inexhaustible store of arrows.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

अगस्त्यवचनाच्चैव – अगस्त्यवचनात् + च + एव

**(श्चुत्व-सन्धिः) (वृद्धि-सन्धिः)**

| | | |
|---|---|---|
| चाक्षयसायकौ | – | च + अक्षयसायकौ (दीर्घ-सन्धिः) |
| शरासनम् | – | शर + असनम् (दीर्घ-सन्धिः) |
| परमप्रीतस्तूणी | – | परमप्रीतः + तूणी (विसर्ग-सन्धिः) |
| जग्राहैन्द्रम् | – | जग्राह + ऐन्द्रम् (वृद्धि-सन्धिः) |

**(ख) समासः**

| | | |
|---|---|---|
| अगस्त्यवचनात् | – | अगस्त्यस्य वचनम् अगस्त्यवचनम् (ष० तत्पु०) तस्मात् |
| शरासनम् | – | शराणाम् असनम् (ष० तत्पु०) |
| परमप्रीतः | – | परमश्च प्रीतः परमप्रीतः (कर्मधारयः) |
| अक्षयसायकौ | – | अक्षयाः सायकाः ययोः तौ (बहुव्रीहिः) |
| अक्षयः | – | न क्षयः यस्य (बहुव्रीहिः) |

**(ग) तद्धितान्तः**

| | | |
|---|---|---|
| ऐन्द्रम् | – | इन्द्र + अण् (इन्द्रस्य इदम्) |

**(घ) व्युत्पत्तिः**

| | | |
|---|---|---|
| शरासनम् | – | शराः अस्यन्ते क्षिप्यन्ते अनेनेति शरासनम् (धनुः) |

---

## अभ्यासः – 24

**(श्लोकः 42–43$^1/_2$)**

1. **विवरणानुसारं श्लोकात् पदानि चित्वा रिक्तस्थाने लिखत–**

   [ **विवरण के अनुसार श्लोक से पद चुनकर रिक्त स्थान में लिखें।** Fill in the blanks with the words from the verse as per the analysis. ]

**यथा–** (क) अ० नपुं० प० एक० ........**अगस्त्यवचनात्**........

(ख) ग्रह्- कर्तरि लिट् प्रपु० एक०

(ग) निश्चयार्थकम् अव्ययम्

(घ) इ० पुं० द्विती० द्वि०

(ङ) अ० पुं० द्विती० द्वि०

(च) अ० पुं० द्विती० एक०

2. **पठितस्य श्लोकस्य पदच्छेदं पूरयत–**

[ **पठित श्लोक का पदच्छेद पूरा करें।** Complete the splitting of the word of the present verse. ]

अगस्त्यवचनात् च जग्राह शरासनम् । च

परमप्रीतः च ।

3. **विसन्धिं कुरुत–**

[ **सन्धिविच्छेद करें।** Disjoin the euphonic combination. ]

**यथा–** (क) चैव = **च** + **एव** (घ) पदारविन्दम् = +

(ख) कुशासनम् = + (ङ) स्नेहासिक्तः = +

(ग) ततस्ततः = + (च) तथैव = +

4. **यथोचितं योजयत–**

[ **सही मेल बनाएं।** Match with the appropriate one. ]

| | | | |
|---|---|---|---|
| **यथा–** (i) | जग्राह | (क) | गम् |
| (ii) | चकार | (ख) | पठ् |
| (iii) | पपाठ | (ग) | ग्रह |
| (iv) | शशाक | (घ) | कृ |
| (v) | चखाद | (ङ) | शक् |
| (vi) | जगाम | (च) | खाद् |

5. **विग्रहवाक्यं विलिख्य समासं निर्दिशत–**

[ **विग्रहवाक्य लिखकर समास निर्देश करें।** Write the analytical sentence and identify the compound. ]

**यथा–** (क) शरासनम् **शराणाम् असनम् (ष. तत्पु.)**

(ख) महार्णवः

(ग) कुशासनम्

(घ) रामलक्ष्मणौ

(ङ) अगस्त्यवचनात्

**श्लोकः**

।

वसतस्तस्य रामस्य वने वनचरैः सह ॥ 43 ॥

ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ।
स तेषां प्रतिशुश्राव राक्षसानां तदा वने ॥ 44 ॥

**पदच्छेदः**

।

वसतः तस्य रामस्य वने वन-चरैः सह ॥ 43 ॥

ऋषयः अभ्यागमन् सर्वे वधाय असुर-रक्षसाम् ।
सः तेषाम् प्रति-शुश्राव राक्षसानाम् तदा वने ॥ 44 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| वसतः | वसत्- त्० पुं० ष० एक० | सर्वे | अ० सर्व० पुं० प्र० बहु० |
| तस्य | तद्- द्० सर्व० पुं० ष० एक० | वधाय | अ० पुं० च० एक० |
| रामस्य | अ० पुं० ष० एक० | असुर-रक्षसाम् | असुररक्षस्- स्० नपुं० ष० बहु० समस्तम् |
| वने | अ० नपुं० स० एक० | सः | तद्- द्० सर्व० पुं० प्र० एक० |
| वन-चरैः | अ० पुं० तृ० बहु० समस्तम् | प्रतिशुश्राव | प्रति+श्रु - कर्तरि लिट् प्रपु० एक० |
| सह | अव्ययम् | राक्षसानाम् | अ० पुं० ष० बहु० |
| ऋषयः | इ० पुं० प्र० बहु० | तदा | तद्धितान्तम् अव्ययम् |
| अभ्यागमन् | अभि+आ+गम् - कर्तरि लुङ् प्रपु० बहु० | वने | अ० नपुं० स० एक० |

**आकाङ्क्षा**

**अभ्यागमन् ।**

के अभ्यागमन् ? सर्वे ऋषयः अभ्यागमन् ।

ऋषयः कुत्र अभ्यागमन् ? — ऋषयः तस्य रामस्य (समीपम्) अभ्यागमन्।
ऋषयः किमर्थम् अभ्यागमन् ? — ऋषयः असुररक्षसां वधाय (वधं प्रार्थयितुम्) अभ्यागमन्।

**प्रतिशुश्राव।**
कः प्रतिशुश्राव ? — सः (रामः) प्रतिशुश्राव।
सः केषां प्रतिशुश्राव ? — सः तेषां प्रतिशुश्राव।
सः किं प्रतिशुश्राव ? — सः राक्षसानां (वधं) प्रतिशुश्राव।

**अन्वयः**

वनचरैः सह वने वसतः तस्य रामस्य (समीपं) सर्वे ऋषयः असुररक्षसां वधाय अभ्यागमन्। सः तेषां (ऋषीणां) राक्षसानां (वधं) प्रतिशुश्राव।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| तदा | तस्मिन् समये | उसी समय | at that time |
| वनचरैः सह | किरातैः सह | वनचरों के साथ | with the foresters |
| वने | अरण्ये | जंगल में | in the forest |
| वसतः | निवसतः | निवास करते हुए | dwelling |
| तस्य रामस्य | तस्य रामस्य | उस (राम) के | his |
| सर्वे | समस्ताः | सभी | all |
| ऋषयः | मुनयः | मुनियों ने | the seers |
| असुररक्षसाम् | दानव-रक्षसाम् | असुर एवं राक्षसों के | demons who hate gods |
| वधाय | संहाराय | वध के लिए | for killing |
| अभ्यागमन् | समागतवन्तः | आए | called on |
| सः | रामः | वह (राम) | he (Rāma) |
| तेषाम् | ऋषीणाम् | उन (ऋषियों) की | of those seers |
| राक्षसानाम् | दानवानां (वधं) | राक्षसों के (वध) | of the demons |
| प्रतिशुश्राव | अङ्गीचकार | स्वीकार किया | accepted |

**भावार्थः**

**संस्कृतम्**– वनवासिभिः सह अरण्ये निवसतः राघवस्य सविधे राक्षसैः पीडिताः सर्वे ऋषयः राक्षसानां संहारार्थं प्रार्थनायै आगतवन्तः। रामोऽपि तेषाम् राक्षसानां वधं कर्तुं ऋषीणां प्रार्थनां स्वीचकार।

**हिन्दी**– वनचरों के साथ रह रहे श्रीराम के समीप राक्षसों से पीड़ित ऋषिगण राक्षसों के संहार की प्रार्थना हेतु आए। श्रीराम ने राक्षसों के संहार हेतु ऋषियों की प्रार्थना स्वीकार किया।

**आंग्लम्**– While the afore said Rāma was sojourning in the forest with foresters, all the seers (dwelling in the forest) called (on him) with a request to kill the demons and ogres (haunting the forest). In the presence of those seers dwelling in the forest of Daṇḍaka and glorious as fire Śrī Rāma then agreed to kill the ogres in that forest.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

वसतस्तस्य – वसतः + तस्य (विसर्ग-सन्धिः)

ऋषयोऽभ्यागमन् – ऋषयः + अभ्यागमन् (विसर्ग-सन्धिः)

वधायासुररक्षसाम् – वधाय + असुररक्षसाम् (दीर्घ-सन्धिः)

(ख) **समासः**

वनचरैः – वने चरति इति वनचरः (उपपद तत्पु०) तैः

असुरक्षसाम् – असुराः च रक्षांसि च असुररक्षांसि (द्वन्द्वः) तेषाम् असुररक्षसाम्।

(ग) **कृदन्तः**

वसतः – वस् + शतृ = वसत्

(घ) **कारकम्**

वधाय – वधं कारयितुं ("क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी)

(ii) **कोशः**

प्रतिश्रवः – आश्रवः सङ्गरः सन्धा प्रतिश्रवः संश्रवः प्रतिज्ञा च (हलायुधकोशः)

## अभ्यासः - 25

### (श्लोकः $43\frac{1}{2}$-44)

1. **श्लोकं पठित्वा उत्तरं लिखत–**

[ **श्लोक पढ़कर उत्तर लिखें।** Answer the questions on the basis of the verse. ]

(क) के अभ्यागमन् ?

(ख) रामः किं प्रतिशुश्राव ?

(ग) ऋषयः कुत्र अभ्यागमन् ?

2. **यथानिर्देशं श्लोकात् पदानि चित्वा लिखत–**

[ **यथानिर्देश श्लोक से पद चुनकर लिखें।** Pick up the words from the verse and write them as per the instruction. ]

| | | | |
|---|---|---|---|
| (क) | अव्ययपदे | (i) | (ii) |
| (ख) | तिङन्तपदे | (i) | (ii) |
| (ग) | कृदन्तशब्दः | (i) | |
| (घ) | षष्ठ्यन्तपदानि | (i) | (ii) |
| | | (iii) | (iv) |
| | | (v) | (vi) |
| (ङ) | प्रथमान्तपदे | (i) | (ii) |

3. **प्रकृति-प्रत्यय-विभागं कुरुत–**

[ **प्रकृति प्रत्यय को अलग करें।** Split the base and the suffix. ]

| | | | | | | |
|---|---|---|---|---|---|---|
| **यथा-** | (क) | वसतः | = | **वसत्** | - | **वस् + शतृ** |
| | (ख) | पठतः | = | | - | |
| | (ग) | निवसतः | = | | - | |
| | (घ) | प्रकुर्वतः | = | | - | |
| | (ङ) | धावतः | = | | - | |

4. **सन्धिं कुरुत–**

[ **सन्धि करें।** Join the words. ]

| | | | | |
|---|---|---|---|---|
| **यथा–** | (क) | वसतः + तस्य | = | **वसतस्तस्य** |
| | (ख) | ऋषयः + अभ्यागमन् | = | |
| | (ग) | धीराः + तत्र | = | |
| | (घ) | सर्वे + अत्र | = | |
| | (ङ) | मुनयः + अगच्छन् | = | |
| | (च) | पठनाय + अत्र | = | |

5. **समासं कुरुत–**

[ **समास करें।** Make the compound. ]

| | | | | | |
|---|---|---|---|---|---|
| **यथा–** | (क) | असुराश्च रक्षांसि च | = | ......**असुररक्षांसि**...... | (......**द्वन्द्वः**......) |
| | (ख) | कृष्णश्च अर्जुनश्च | = | | (............................) |
| | (ग) | नराश्च वानराश्च | = | | (............................) |
| | (घ) | पशवश्च पक्षिणश्च | = | ........................................ | (............................) |
| | (ङ) | धवश्च खदिरश्च | = | ........................................ | (............................) |

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) वसत् (ख) तद् (ग) प्रति + श्रु (लटि, लिटि, लृटि, लोटि लङि च) (घ) तदा (ङ) सह

**श्लोकः**

**प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् ।**
**ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥45 ॥**

**पदच्छेदः**

प्रति-ज्ञातः च रामेण वधः संयति रक्षसाम् ।
ऋषीणाम् अग्नि-कल्पानाम् दण्डकारण्य-वासिनाम् ॥ 45 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| प्रतिज्ञातः | अ० पुं० प्र० एक० समस्तम् | संयति | संयत्- त्० स्त्री० स० एक० |
| च | अव्ययम् | रक्षसाम् | रक्षस्- स्० नपुं० ष० बहु० |
| रामेण | अ० पुं० तृ० एक० | ऋषीणाम् | इ० पुं० ष० बहु० |
| वधः | अ० पुं० प्र० एक० | अग्नि-कल्पानाम् | अ० पुं० ष० बहु० समस्तम् |
| | | दण्डकारण्य-वासिनाम् | न्० पुं० ष० बहु० समस्तम् |

**आकाङ्क्षा**

**प्रतिज्ञातः।**

| | |
|---|---|
| केन प्रतिज्ञातः ? | रामेण प्रतिज्ञातः । |
| कः प्रतिज्ञातः ? | वधः प्रतिज्ञातः । |
| केषां वधः प्रतिज्ञातः ? | रक्षसां वधः प्रतिज्ञातः । |
| कुत्र | संयति |
| केषां (सन्निधौ) प्रतिज्ञातः ? | ऋषीणां (सन्निधौ) प्रतिज्ञातः । |
| कीदृशानां ऋषीणां सन्निधौ प्रतिज्ञातः ? | अग्निकल्पानां ऋषीणां (सन्निधौ) प्रतिज्ञातः । |
| पुनः कीदृशानां ऋषीणां ? | दण्डकारण्यवासिनाम् ऋषीणाम् । |

**अन्वयः**

रामेण च अग्निकल्पानां दण्डकारण्यवासिनाम् ऋषीणां (सन्निधौ) संयति रक्षसां वधः प्रतिज्ञातः ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| रामेण | दशरथपुत्रेण | दशरथ के पुत्र राम द्वारा | by Rāma |
| च | च | भी | also |
| अग्निकल्पानाम् | अग्नितुल्यानाम् | अग्नि के समान | glorious as fire |
| दण्डकारण्यवासिनाम् | दण्डकवने निवसताम् | दण्डकारण्य में निवास करने वाले | dwelling in the forest of *Daṇḍaka* |
| ऋषीणां | मुनीनाम् | ऋषियों का | of the seers |
| संयति | युद्धे | युद्ध में | in an encounter |
| रक्षसाम् | राक्षसानाम् | राक्षसों का | of demons |
| वधः | संहारः | संहार | the killing |
| प्रतिज्ञातः | प्रतिश्रुतः | प्रतिज्ञा की | solemnly promised |

**भावार्थः**

**संस्कृतम्**– दण्डकारण्यनिवासिनाम् अग्नितुल्यानां ऋषीणां पुरस्तात् रामेण युद्धे राक्षसानां वधः प्रतिज्ञातः।

**हिन्दी**– राम ने दण्डकारण्य निवासी, अग्नितुल्य ऋषियों के सामने राक्षसों के वध की प्रतिज्ञा की।

**आंग्लम्**– Rāma has promised for the killing of all the demons in battle in front of the sages who are pure like fire and dwelling in *Daṇḍakāraṇya*.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

प्रतिज्ञातश्च – प्रतिज्ञातः + च (विसर्ग-सन्धिः)

स च – सः + च (विसर्ग-सन्धिः)

दण्डकारण्यवासिनाम् – दण्डक-अरण्यवासिनाम् (दीर्घ-सन्धिः)

**(ख) सामासः**

दण्डकारण्यवासिनाम् – दण्ड्कारण्ये वसन्ति इति दण्डकारण्यवासिनः तेषां (उपपद तत्पु०)

(ग) **कारकम्**
रक्षसां वधः – "कर्तृकर्मणोः कृतिः" इति कर्मणि षष्ठी

(घ) **तद्धितान्तः**
अग्निकल्पानाम् – अग्नि + कल्पप् (ईषदसमाप्तौ कल्पब्देशीयरौ)

**अवधेयम्**

**कर्मणि प्रयोगस्य विषये**

## अभ्यासः - 26
### (श्लोकः 45)

1. **कोष्ठकस्थ-धातून् प्रयुज्य यथोदाहरणं रिक्तस्थानं पूरयत–**
[ **कोष्ठक में प्रदत्त धातु के प्रयोग से उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks with the roots given in the bracket as shown in the example. ]

**यथा–** (क) रामेण वधः प्रतिज्ञातः ........**प्रतिज्ञातः**........ (**प्रति - ज्ञा**)
(ख) कृष्णेन कंसः .................... (हन्)
(ग) दुर्गया मरिषासुरः .................... (नि + हन्)
(घ) बालकेन .................... (क्रीड्)
(ङ) राज्ञा सेवकः .................... (सेव्)
(च) शिवेन त्रिपुरासुरस्य वधः .................... (कृ)

2. **अधोलिखित-पदानां परिचयं लिखत–**
[ **अधोलिखित पदों का परिचय लिखें।** Identify the following words. ]

| | पदम् | लिङ्गम् | विभक्तिः | वचनम् |
|---|---|---|---|---|
| **यथा–** | प्रतिज्ञातः | **पुं.** | **प्रथमा** | **एक.** |
| | संयति | | | |
| | रामेण | | | |
| | अग्निकल्पानाम् | | | |
| | रक्षसाम् | | | |
| | ऋषीणाम् | | | |

3. **श्लोकस्थानि विशेषणपदानि चित्वा तेषां विशेष्यपदानि निर्दिशत–**
[ **श्लोक से विशेषण पदों को चुनकर उनके विशेष्य पद निर्देश करें।** Find out the qualifiers from the verse and point out their qualificands. ]

| विशेषणम् | विशेष्यम् |
| --- | --- |

4. **श्लोकं पठित्वा सत्यम् ✔ असत्यं × वा लिखत–**
[ **श्लोक के आधार पर सत्य ✔ या असत्य × लिखें।** Mention right ✔ or wrong × on the basis of the verse. ]

(क) रामेण वधः प्रतिज्ञातः । ☐
(ख) रामेण देवानां वधः प्रतिज्ञातः । ☐
(ग) रामेण दशरथस्य सन्निधौ वधः प्रतिज्ञातः । ☐
(घ) ऋषयः अग्निकल्पाः आसन् । ☐
(ङ) ऋषयः चित्रकूटवासिनः आसन् । ☐

5. **यथोचितं योजयत–**
[ **सही मेल बनाएं।** Match with appropriate one. ]

| | | | |
| --- | --- | --- | --- |
| (i) | संयति | (क) | अव्ययम् |
| (ii) | वधः | (ख) | त् स्त्री० स० एक० |
| (iii) | च | (ग) | न्० पु० ष० बहु० |
| (iv) | दण्डकारण्यवासिनाम् | (घ) | इ० पु० ष० बहु० |
| (v) | ऋषीणाम् | (ङ) | अ० पुं० प्र० एक० |

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**
[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) प्रतिज्ञात (ख) संयत् (ग) + वासिन् (घ) + कल्प

**श्लोकः**

तेन तत्रैव वसता जनस्थाननिवासिनी।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी॥ 46॥

**पदच्छेदः**

तेन तत्र एव वसता जनस्थान-निवासिनी।
वि-रूपिता शूर्पणखा राक्षसी काम-रूपिणी॥ 46॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| तेन | तद्- द्० सर्व० पुं० तृ० एक० | विरूपिता | आ० स्त्री० प्र० एक० समस्तम् |
| तत्र | तद्धितान्तम् अव्ययम् | शूर्पणखा | आ० स्त्री० प्र० एक० |
| एव | अव्ययम् | राक्षसी | ई० स्त्री० प्र० एक० |
| वसता | त्० पुं० तृ० एक० | कामरूपिणी | ई० स्त्री० प्र० एक० समस्तम् |
| जनस्थान-निवासिनी | ई० स्त्री० प्र० एक० | | |

**आकाङ्क्षा**

**विरूपिता।**

| | |
|---|---|
| केन विरूपिता ? | तेन (रामेण) विरूपिता। |
| तेन (रामेण) का विरूपिता ? | तेन (रामेण) राक्षसी विरूपिता। |
| का राक्षसी विरूपिता ? | शूर्पणखा राक्षसी विरूपिता। |
| कीदृशी शूर्पणखा ? | कामरूपिणी शूर्पणखा। |
| पुनः कीदृशी ? | जनस्थान-निवासिनी। |
| कुत्र वसता रामेण विरूपिता ? | तत्रैव (वने) वसता रामेण विरूपिता। |

**अन्वयः**

तत्र एव वसता तेन जनस्थाननिवासिनी कामरूपिणी राक्षसी शूर्पणखा विरूपिता।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| तत्र एव | तस्मिन् वने एव | उस वन में ही | in that very forest |
| वसता | वासं कुर्वता | रहते हुए | while living |
| तेन | रामेण | उसके (राम) द्वारा | by him (Rāma) |
| जनस्थाननिवासिनी | दण्डकारण्यवासिनी | जनस्थान में रहने वाली | dwelling in *Janasthāna* |
| कामरूपिणी | मनोऽनुकूलरूपधारिणी | इच्छानुसार रूप बनाने वाली | capable of assuming any form at will |
| राक्षसी | निशाचरी | राक्षसी | demoness |
| शूर्पणखा | शूर्पणखा-नाम्नी | शूर्पणखा | Śurpaṇakhā by name |
| विरूपिता | वैरूप्यं प्रापिता | विरूप की गयी | lopped off |

**भावार्थः**

**संस्कृतम्**— दण्डकारण्ये पञ्चवट्याम् एव निवसता तेन रामेण दण्डकारण्य-वासिनी नानाविध-रूपधारिणी शूर्पणखा नाम राक्षसी (नासा-कर्ण-छेदनपूर्वकं) विरूपिता।

**हिन्दी**— दण्डकारण्य की पञ्चवटी में वास करने वाले राम के द्वारा उसी वन में वास करने वाली शूर्पण्खा नामक राक्षसी नासा-कर्ण-छेदनपूर्वक विरूप की गई।

**आंग्लम्**— The ogress Śūrpaṇakhā (so-called because the monstress possessed nails as big as a winnowing fan), who dwelt in *Janasthāna* (a portion of the *Daṇḍaka* forest) and was capable of assuming any form at will, was disfigured by Śrī Rāma (by having her nose and ears lopped off by Lakṣmaṇa) while living in that very forest.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

तत्रैव – तत्र + एव (वृद्धि-सन्धिः)

(ख) **समासः**

जनस्य स्थानम्– जनस्थानम् (ष० तत्पु०) {जनः= रावणबलम्}

जनस्थाननिवासिनी – जनस्थाने निवसति इति जनस्थाननिवासिनी (उपपद-तत्पु०)

| | | |
|---|---|---|
| कामरूपिणी | – | कामं रूपं कामरूपं (कर्मधारयः) कामरूपम् अस्याः अस्ति इति कामरूपिणी (इनि) |
| शूर्पणखा | – | शूर्पाणि इव नखाः यस्याः सा शूर्पणखा (बहुव्रीहिः) |

**(ग) कृदन्ताः**

| | | |
|---|---|---|
| वसता | – | वस् + शतृ = वसत् |
| विरूपिता | – | वि + रूप् + क्त + टाप् |
| निवासिनी | – | निवस् + णिनि ('सुप्यजातौ णिनिस्ताच्छील्ये') + ङीप् |

**(ग) तद्धितान्तः**

| | | |
|---|---|---|
| कामरूपिणी | – | कामरूप + इनि (कामरूपम् अस्याः अस्ति इति कामरूपिणी) |

(ii) **पर्यायवाचिनः शब्दाः**

| | | |
|---|---|---|
| राक्षसी | – | दानवी, असुरी |
| कामरूपिणी | – | नानारूपधारिणी, इच्छारूपिणी |

## अभ्यासः – 27
## (श्लोकः 46)

1. **अन्वयं पूरयत–**

[**अन्वय पूरा करें।** Complete the construction.]

तत्र ............ वसता ............ कामरूपिणी ............ शूर्पणखा ............ विरूपिता ।

2. **'क'-स्तम्भं 'ख'-स्तम्भेन योजयत–**

[**'क' स्तम्भ को 'ख' स्तम्भ से मिलाएं।** Match *'ka'*-column with *'kha'*-column.]

| 'क' | | 'ख' | |
|---|---|---|---|
| (क) | तत्र | (i) | राक्षस्याः नाम |
| (ख) | राक्षसी | (i) | अव्ययम् |
| (ग) | शूर्पणखा | (iii) | ई० स्त्री० प्र० एक० समस्तपदम् |
| (घ) | कामरूपिणी | (iv) | वसता इत्यस्य विशेष्यपदम् |
| (ङ) | तेन | (v) | ई० स्त्री० प्र० एक० |

3. **यथानिर्देशं पदानि लिखत-**

[ **यथानिर्देश पदों को लिखें।** Write the words as per the instruction. ]

यथा– (क) अव्ययद्वयम् = **तत्र** **एव**

(ख) ई० स्त्री० प्र० एक० =

(ग) आ० स्त्री० प्र० एक०=

(घ) सर्वनाम =

(ङ) शत्रन्तं विशेषणम् =

4. **श्लोकं पठित्वा उत्तरं लिखत-**

[ **श्लोक के आधार पर उत्तर लिखें।** Answer the questions on the basis of the verse. ]

यथा– (क) किंनामधेया राक्षसी विरूपिता ? **शूर्पणखानामधेया राक्षसी विरूपिता।**

(ख) सा केन विरूपिता ? ..................................................।

(ग) शूर्पणखा का आसीत् ? ..................................................।

(घ) सा किदृशी आसीत् ? ।

(ङ) कुत्र निवसता रामेण शूर्पणखा विरूपिता ? ..................................................।

5. **श्लोकस्थानि विशेषणपदानि उचित-विशेष्यपदैः योजयत-**

[ **श्लोकस्य विशेषणों को उचित विशेष्य से जोड़ें।** Match the qualifiers of the verse with appropriate qualificand.]

(क) वसता =

(ख) जनस्थाननिवासिनी =

(ग) कामरूपिणी =

(घ) राक्षसी =

**श्लोकः**

ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान् ।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥ 47 ॥
निजघान रणे रामस्तेषां चैव पदानुगान् ।
॥ 48 ॥

**पदच्छेदः**

ततः शूर्पणखा-वाक्यात् उद्युक्तान् सर्व-राक्षसान् ।
खरं त्रि-शिरसं च एव दूषणं च एव राक्षसम् ॥ 47 ॥
नि-जघान रणे रामः तेषाम् च एव पदानुगान् ।
॥ 48 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | तद्धितान्तम् अव्ययम् | राक्षसम् | अ० पुं० द्वितीο एक० |
| शूर्पणखावाक्यात् | अ० नपुं० प० एक० समस्तम् | निजघान | नि+हन्-कर्तरि लिट् प्रपु० एक० |
| उद्युक्तान् | अ० पुं० द्विती० बहु० | रणे | अ० पुं० स० एक० |
| सर्व-राक्षसान् | अ० पुं० द्विती० बहु० समस्तम् | रामः | अ० पुं० प्र० एक० |
| | | तेषां | तद्- द्० सर्व० पुं० ष० बहु० |
| खरम् | अ० पुं० द्विती० एक० | | |
| त्रिशिरसम् | स्० पुं० द्विती० एक० | च | अव्ययम् |
| दूषणम् | अ० पुं० द्विती० एक० | एव | अव्ययम् |
| च | अव्ययम् | पदानुगान् | अ० पुं० द्विती० बहु० समस्तम् |
| एव | अव्ययम् | | |

**आकाङ्क्षा**

**निजघान।**

| | |
|---|---|
| कः निजघान ? | रामः निजघान। |
| रामः कुत्र निजघान ? | रामः रणे निजघान। |

| | |
|---|---|
| रामः रणे कं निजघान ? | रामः रणे राक्षसं निजघान। |
| पुनः कं निजघान ? | रामः खरं निजघान। |
| पुनः कं निजघान ? | त्रिशिरसं निजघान। |
| पुनः कं निजघान ? | दूषणं च निजघान। |
| पुनः कं निजघान ? | तेषां पदानुगान् निजघान। |
| पुनः कं निजघान ? | सर्वराक्षसान् निजघान। |
| कीदृशान् सर्वराक्षसान् निजघान ? | उद्युक्तान् सर्वराक्षसान् निजघान। |
| कस्याः वाक्यात् उद्युक्तान् सर्वराक्षसान् निजघान ? | शूर्पणखावाक्यात् उद्युक्तान् सर्वराक्षसान् निजघान। |

**अन्वयः**

ततः शूर्पणखावाक्याद् उद्युक्तान् सर्वराक्षसान् (तत्र विशिष्टं) खरं त्रिशिरसं दूषणं च राक्षसं तेषां पदानुगान् च रणे एव रामः निजघान।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तदनन्तरम् | उसके बाद | then |
| शूर्पणखावाक्यात् | शूर्पणखोक्तवचनात् | शूर्पणखा के वचन से | at the instigation of Śūrpaṇakhā |
| उद्युक्तान् | युद्धाय तत्परान् | युद्ध हेतु तत्पर | prepared for battle |
| सर्वराक्षसान् | सर्व-दानवान् | सभी राक्षसों को | to all the demons |
| खरम् | खरनामानम् | खरनामक | Khara by name |
| त्रिशिरसं | त्रिशिरसाख्यम् | त्रिशिरा नामक | Triśirā by name |
| दूषणम् | दूषणाभिधम् | दूषण नामक | Dūṣaṇa by name |
| च | अपि | भी | also |
| राक्षसम् | असुरम् | राक्षस को | demon |
| तेषाम् | राक्षसानाम् | उनके (राक्षसों के) | their |
| पदानुगान् | अनुचरान् | अनुयायियों को | followers |
| च | अपि | भी | also |
| रणे | युद्धे | युद्ध में | in an encounter |
| एव | एव | ही | alone |
| रामः | राघवः | राम ने | Rāma |
| निजघान | हतवान् | मारा | killed |

**भावार्थः**

**संस्कृतम्**– शूर्पणखाविरूपकरणात् परं रामः शूर्पणखावर्णितवृत्तश्रवणात् युद्धाय उद्यतान् सर्वान् (चतुर्दशसहस्रसंख्याकान्) राक्षसान् विशिष्य खरं दूषणं त्रिशिरसं तेषाम् अनुचरान् च (हतवान्)।

**हिन्दी**– शूर्पणखा को विरूप करने के पश्चात् राम, शूर्पणखा वर्णित घटनाओं को सुनकर युद्ध करने के लिये उद्यत सभी (चौदह हजार) राक्षसों को विशेष कर खर, दूषण त्रिशिरा और उनके अनुचरों को मार डाला।

**आंग्लम्**– Śrī Rāma then killed on the field of Battle all the ogres that came prepared (for an encounter) at the instigation of Śūrpaṇakhā, including their leaders khara, Triśirā and the ogre Duṣaṇa as also their followers.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| वाक्यादुद्युक्तान् | – | वाक्यात् + उद्युक्तान् (जश्त्व-सन्धिः) |
| चैव | – | च + एव (वृद्धि-सन्धिः) |
| रामस्तेषां | – | रामः + तेषां (विसर्ग-सन्धिः) |
| पदानुगान् | – | पद + अनुगान् (दीर्घ-सन्धिः) |

(ख) **सामासः**

| | | |
|---|---|---|
| शूर्पणखावाक्यात् | – | शूर्पणखायाः वाक्यम् शर्पूणखावाक्यम् (ष० तत्पु०) तस्मात् |
| सर्वराक्षसान् | – | सर्वे च ते राक्षसाः सर्वराक्षसाः (कर्मधारयः) तान् |
| पदानुगान् | – | पदानि अनुगच्छति इति पदानुगः (उपपद तत्पु०) तान् |

(ग) **कृदन्तः** –

| | | |
|---|---|---|
| पदानुगः | – | पद + अनु + गम् + ड |

(घ) **तद्धितान्तः**

| | | |
|---|---|---|
| ततः | – | तत् + तसिल् |

(ii) **पर्यायवाचिनः शब्दाः**

| | | |
|---|---|---|
| वाक्यम् | – | उक्तिः, वाक्, वचनम्, कथनम् |
| राक्षसः | – | दानवः, असुरः, रक्षः, दनुजः |

**अवधेयम्**

**कर्मकारकविषये**

## अभ्यासः-28

### (श्लोकः 47-48½)

1. **विसन्धिं कुरुत-**

[**सन्धिविच्छेद करें।** Disjoin the euphonic combination.]

| | | | | | | |
|---|---|---|---|---|---|---|
| **यथा–** | (क) | वाक्यादुद्युक्तान् | = | **वाक्यात्** | + | **उद्युक्तान्** |
| | (ख) | यदुक्तम् | = | | + | |
| | (ग) | यदत्र | = | | + | |
| | (घ) | तदन्यत् | = | | + | |
| | (ङ) | यदिह | = | | + | |

2. **समस्तपदानां विग्रहवाक्यं लिखत-**

[**समस्तपदों के विग्रहवाक्य लिखें।** Write the analytical sentences of the compound words given.]

| | | | | |
|---|---|---|---|---|
| **यथा–** | (क) | शूर्पणखावाक्यात् | = | **शूर्पणखायाः वाक्यं शूर्पणखावाक्यं तस्मात्** |
| | (ख) | कृष्णोपदेशात् | = | |
| | (ग) | रामबाणेन | = | |
| | (घ) | शिवधनुः | = | |
| | (ङ) | अर्जुनलक्ष्यम् | = | |

3. **श्लोकात् यथानिर्देशं पदानि चित्वा लिखत-**

[**श्लोक से यथानिर्देश पदों चुनकर को लिखें।** Write the words from the verse as directed.]

| | | | | |
|---|---|---|---|---|
| **यथा–** | (क) | अ० नपुं० प० एक० | (1) | **शूर्पणखावाक्यात्** |
| | (ख) | अ० पुं० द्विती० बहु० | (3) | |
| | (ग) | अ० पुं० द्विती० एक० | (4) | |
| | (घ) | अव्ययानि | (3) | |
| | (ङ) | समस्तपदानि | (4) | |
| | (च) | ससन्धिपदानि | (4) | |

4. **यथोचितं योजयत-**

[ **यथायोग्य मेल बनाएं।** Match with the appropriate one. ]

| | | | | |
|---|---|---|---|---|
| यथा– | (i) | अव्ययपदम् | (क) | त्रिशिरसम् |
| | (ii) | द्वितीयाबहुवचनान्तम् | (ख) | एव |
| | (iii) | विसर्गसन्धियुक्तं पदम् | (ग) | पदानुगान् |
| | (iv) | दीर्घसन्धियुक्तं पदम् | (घ) | सर्वराक्षसान् |
| | (v) | बहुव्रीहिः | (ङ) | रामस्तेषाम् |

5. **श्लोकस्य भावार्थं पूरयत-**

[ **श्लोक का भावार्थ पूरा करें।** Complete the meaning of the verse. ]

शूर्पणखाविरूपकरणात् ............ रामः ............ युद्धाय ............ राक्षसान् विशिष्य खरं ............ च हतवान्। सः रणे तेषां ............ चैव ............ ।

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) उद्यत (ख) नि + हन् (लिटि) (ग) पदानुग (घ) च (ङ) एव

**श्लोकः**

।

**वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ 48 ॥**

**रक्षसां निहतान्यासन् सहस्राणि चतुर्दश।**

**॥ 49 ॥**

**पदच्छेदः**

।

वने तस्मिन् निवसता जन-स्थान-निवासिनाम् ॥ 48 ॥

रक्षसाम् नि-हतानि आसन् सहस्राणि चतुर्दश।

॥ 49 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| वने | अ० नपुं० स० एक० | निहतानि | अ० नपुं० प्र० बहु० |
| तस्मिन् | तद्- द्० सर्व० नपुं० स० एक० | आसन् | अस्- कर्तरि लङ्०, प्रपु० बहु० |
| निवसता | त्० पुं० तृ० एक० | सहस्राणि | अ० नपुं० प्र० बहु० |
| रक्षसाम् | स्० नपुं० ष० बहु० | चतुर्दश | न्० नपुं० प्र० बहु० |

**आकाङ्क्षा**

**निहतानि आसन्।**

| | |
|---|---|
| कानि निहतानि आसन् ? | चतुर्दशसहस्राणि निहतानि आसन्। |
| केषां चतुर्दशसहस्राणि निहतानि आसन् ? | रक्षसां चतुर्दशसहस्राणि निहतानि आसन्। |
| कीदृशां रक्षसाम् ? | वनस्थाननिवासिनां रक्षसाम्। |
| कुत्र निवसता निहतानि ? | तस्मिन् वने निवसता (रामेण) निहतानि। |

**अन्वयः**

तस्मिन् वने निवसता (रामेण) जनस्थाननिवासिनां रक्षसां चतुर्दश-सहस्राणि निहतानि आसन्।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| तस्मिन् वने | तस्मिन् दण्डकारण्य-विपिने | उस वन में | in that forest |
| निवसता | वासं कुर्वता | रहते हुए | by Rāma while sojourning |
| जनस्थान-निवासिनाम् | दण्डकारण्यवासिनाम् | दण्डकारण्यवासियों | living in Janasthāna |
| रक्षसाम् | असुराणाम् | असुरों के | of demons |
| चतुर्दश-सहस्राणि | चतुर्दशसहस्रसंख्याकानि | चौदह हजार | fourteen thousand |
| निहतानि आसन् | मारितानि आसन् | मारे गए | were killed |

**भावार्थः**

**संस्कृतम्**— दण्डकारण्ये स्थितवता रामेण दण्डकारण्यवासिनः चतुर्दशसहस्र-संख्याकाः राक्षसाः मारिताः आसन् ।

**हिन्दी**— दण्डकारण्य में रहते हुए राम ने उस वन के चौदह हजार राक्षसों को मारा था।

**आंग्लम्**— Fourteen thousand of ogres dwelling in *Janasthāna* were killed by Rāma while sojourning in that forest.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

निहतान्यासन् – निहतानि + आसन् (यण्-सन्धिः)

तस्मिन्निवसता – तस्मिन् + निवसता (नुडागमः)

**(ख) समासः**

जनस्थाननिवासिनाम् – जनस्य (रावणबलस्य) स्थानम् जनस्थानम् (ष० तत्पु०); जनस्थाने निवसन्ति इति जनस्थाननिवासिनः (उपपद तत्पु०) तेषाम् {जनस्य = रावणबलस्य}

(ग) **कृदन्तौ**

निवसता – नि + वस् + शतृ = निवसत्

निहतानि – नि + हन् + क्त = निहत

(घ) **तद्धितान्तः**

निवासिनाम् – नि-वस् + णिनि = निवासिन्

---

## अभ्यासः – 29

**(श्लोकः 48½–49½)**

1. **समस्तपदं समासनाम च लिखत–**

**[ समस्तपद और समासनाम लिखें।** Write the compound-word and the compound-name.]

यथा– (क) जनस्य स्थानम् = **जनस्थानम्** (**ष. तत्पु.**)

(ख) राज्ञः पुरुषः = (..........)

(ग) सर्वान् च तान् जनान् = (..........)

(घ) शूर्पाणि इव नखाः यस्याः = (..........)

(ङ) हरिणा त्रातः = (..........)

2. **कर्तरि प्रयोगे परिवर्तयत–**

**[ कर्तृवाच्य में बदलें।** Change into active voice.]

(क) रामेण रक्षसां चतुर्दशसहस्राणि निहतानि। =

(ख) रामेण वधः प्रतिज्ञातः। =

(ग) रामेण शूर्पणखा विरूपिता। =

(घ) पौरैः रामः अनुगतः। =

(ङ) रामलक्ष्मणाभ्यां गङ्गानदी तीर्णा। =

3. **रिक्तस्थानं पूरयत–**

**[ रिक्तस्थान की पूर्ति करें।** Fill in the blanks.]

| | | | | | | |
|---|---|---|---|---|---|---|
| **यथा–** | (क) | निहतम् | = | नि + हन् | + | क्त |
| | (ख) | प्राप्तम् | = | | + | |
| | (ग) | तीर्णम् | = | | + | |
| | (घ) | पूजितः | = | | + | |
| | (ङ) | परित्यक्ता | = | | + | |
| | (च) | गतम् | = | | + | |

4. **निर्दिष्टविभक्तिरूपाणि लिखत–**

[ **शब्दरूप पूरा करें।** Complete the declension. ]

| | | | | | |
|---|---|---|---|---|---|
| **यथा–** | (क) | रक्षसः | रक्षसोः | रक्षसाम् | (षष्ठी) |
| | (ख) | निहतम् | | | (प्रथमा) |
| | (ग) | सहस्रम् | | | (प्रथमा) |
| | (घ) | निवसता | | | (तृतीया) |
| | (ङ) | निवासिनः | | | (षष्ठी) |
| | (च) | वने | | | (सप्तमी) |
| | (छ) | तस्मिन् | | | (सप्तमी) |

**अवधेयम्**

**क्त-प्रत्ययस्य क्तवतु-प्रत्ययस्य च प्रयोगः एवं भवति-**

| **क्त - प्रयोगः** | **क्तवतु - पुंलिङ्गे** | **क्तवतु-स्त्रीलिङ्गे** |
|---|---|---|
| तेन/तया ग्रन्थः पठितः | सः ग्रन्थं पठितवान् | सा ग्रन्थं पठितवती |
| तेन/तया कविता पठिता | सः कवितां पठितवान् | सा कवितां पठितवती |
| तेन/तया पुस्तकं पठितम् | सः पुस्तकं पठितवान् | सा पुस्तकं पठितवती |

**श्लोकः**

।

ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ 49 ॥

सहायं वरयामास मारीचं नाम राक्षसम् ।

॥ 50 ॥

**पदच्छेदः**

............................................................ ।

ततः ज्ञाति-वधम् श्रुत्वा रावणः क्रोध-मूर्च्छितः ॥ 49 ॥

सहायम् वरयामास मारीचम् नाम राक्षसम् ।

............................................................ ॥ 50 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | तद्धितान्तम् अव्ययम् | सहायम् | अ० पुं० द्विती० एक० |
| ज्ञाति-वधम् | अ० पुं० द्विती० एक० समस्तम् | वरयामास | वृ + णिच्- कर्तरि लिट् प्रपु० एक० |
| श्रुत्वा | क्त्वान्तम् अव्ययम् | मारीचम् | अ० पुं० द्विती० एक० |
| रावणः | अ० पुं० प्र० एक० | नाम | अव्ययम् |
| क्रोध-मूर्छितः | अ० पुं० प्र० एक० रामस्तम् | राक्षसम् | अ० पुं० द्विती० एक० |

**आकाङ्क्षा**

**वरयामास।**

| | |
|---|---|
| कः वरयामास ? | रावणः वरयामास। |
| कीदृशः रावणः वरयामास ? | क्रोधमूर्छितः रावणः वरयामास। |
| कथं क्रोधमूर्छितः ? | ज्ञातिवधं श्रुत्वा क्रोधमूर्छितः। |
| किं वरयामास ? | सहायं वरयामास। |
| रावणः कं सहायं वरयामास ? | रावणः राक्षसं सहायं वरयामास। |
| कं राक्षसम् ? | मारीचं नाम राक्षसम्। |

**अन्वयः**

ततः ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः (अभवत्)। (सः) मारीचं नाम राक्षसं सहायं वरयामास ॥

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तदनन्तरम् | उसके बाद | then |
| ज्ञातिवधम् | ज्ञातिजनानां हत्याम् | सम्बन्धियों के वध | the killing of kinsmen |
| श्रुत्वा | आकर्ण्य | सुनकर | having heared |
| क्रोधमूर्छितः | कोपेन मूर्छितः | क्रोध से मूर्छित | stupefied through anger |
| मारीचं नाम | मारीच इति प्रसिद्धम् | मारीच नाम से प्रसिद्ध | Mārīca by name |
| राक्षसम् | असुरम् | राक्षस (से) | demon |
| सहायम् | सहायताम् | सहयोग | the help |
| वरयामास | याचितवान् | मांगा | sought |

**भावार्थः**

**संस्कृतम्**– आत्मीयजनानां वधवृत्तं विज्ञाय रावणः क्रोधाविष्टः जातः। सः प्रतिक्रोधभावनया मारीचं नाम राक्षसं साहाय्यं याचितवान्।

**हिन्दी**– स्वजनों की मृत्यु का वृत्तान्त सुनकर रावण क्रोधाकुल हो गया। उसने राम से बदला लेने के लिए मारीच नामक राक्षस से सहायता की प्रार्थना की।

**आंग्लम्**– Stupefied through anger to hear of the destruction of his kinsmen, Rāvaṇa (the king of Laṅkā) sought the help of a fellow-ogre Mārīca by name (one of the two sons of the ogress Tāḍakā).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

ततो ज्ञातिवधं – ततः + ज्ञातिवधं (विसर्गसन्धिः)

**(ख) सामासः**

ज्ञातिवधम् – ज्ञातीनां वधः ज्ञातिवधः (ष० तत्पु०) तम्

क्रोधमूर्छितः – क्रोधेन मूर्छितः (तृ० तत्पु०) क्रोधमूर्छितः

**(ग) कृदन्तः**

श्रुत्वा – श्रु + क्त्वा

**(घ) तद्धितान्तौ**

ततः – तत् + तसिल्

मूर्छितः – मूर्छा + इतच् (मूर्छा अस्य संजाता इति तारकादित्वात् इतच्)

(ii) **व्युत्पत्तिः**

रावणः – रौति रावयति इति रावणः

(iii) **कोशः**

मूर्छितः – मूर्छितौ मूढसोच्छ्रयौ (वैजयन्तीकोशः)

---

## अभ्यासः – 30

**(श्लोकः 49½-50½)**

1. **श्लोकस्थानां द्वितीयाविभक्त्यन्त-पदानाम् एकत्र संग्रहं कुरुत तेषां मूलशब्दं (प्रातिपदिकं) च निर्दिशत। [श्लोक के द्वितीया विभक्त्यन्त पदों को एकत्र करें और उनके मूल शब्द (प्रतिपदिक) का निर्देश करें।** Write together the words ending in accusative case-endings in the verse and point out their nominal stem.]

**यथा**– मारीचम् – **मारीच** (1) ........................................।

(2) ........................................। (3) ........................................।

2. **अधोलिखित पदानां परिचयं लिखत–**

[**अधोलिखित पदों का परिचय लिखें।** Recognise the following words.]

**यथा**– (क) ततः = **तसिलन्तम् अव्ययम्** ।

(ख) रावणः = ........................................।

(ग) श्रुत्वा = ............................ ।

(घ) निशम्य = ............................ ।

(ङ) क्रोधेन = ............................ ।

(च) रक्षांसि = ............................ ।

(च) वरयामास = ।

3. **श्लोकानुसारम् उत्तरं लिखत-**

[**श्लोक के आधार पर उत्तर लिखें।** Write the answer on the basis of the verse.]

(क) कः क्रोधमूर्छितः जातः ? ............................ ।

(ख) सः किं कृत्वा क्रोधमूर्छितः जातः ? ............................ ।

(ग) रावणः कं सहायं वरयामास ? ............................ ।

(घ) मारीचः कः आसीत् ? ............................ ।

(ङ) रावणस्य ज्ञातयः केन हताः ? ............................ ।

4. **प्रयोगान् बहुवचने परिवर्तयत-**

[**प्रयोगों को बहुवचन में बदलें।** Change the singular into plural.]

यथा- (क) क्रोधमूर्छितः = **क्रोधमूर्छिताः** ।

(ख) ज्ञातिवधेन = ............................ ।

(ग) सहायम् = ............................ ।

(घ) राक्षसम् = ।

(ङ) वरयामास = ।

5. **क्त्वान्त-रूपं लिखत-**

[**क्त्वान्त रूप लिखें।** Write the words ending in *ktvā* suffix.]

यथा- (क) श्रु + **क्त्वा** = **श्रुत्वा** ।

(ख) हन् + = ।

(ग) लभ् + = ............................ ।

(घ) सह् + = सोढ्वा ।

(ङ) गम् + = ............................ ।

**श्लोकः**

। 

**वार्यमाणः सुबहुशो मारीचेन स रावणः ॥ 50 ॥**

**न विरोधो बलवता क्षमो रावण तेन ते ।**

**अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ 51 ॥**

**जगाम सहमारीचस्तस्याश्रमपदं तदा ।**

........................................ ॥ 52 ॥

**पदच्छेदः**

........................................ ।

वार्यमाणः सु-बहुशः मारीचेन सः रावणः ॥ 50 ॥

न विरोधः बलवता क्षमः रावण तेन ते ।

अनादृत्य तु तद्वाक्यं रावणः काल-चोदितः ॥ 51 ॥

जगाम सह-मारीचः तस्य आश्रम-पदं तदा ।

........................................ ॥ 52 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| वार्यमाणः | अ० पुं० प्र० एक० | अनादृत्य | ल्यबन्तम् अव्ययम् |
| सुबहुशः | सुबहुशस्- अव्ययम् समस्तम् | तु | अव्ययम् |
| मारीचेन | अ० पुं० तृ० एक० | तद्वाक्यम् | अ० नपुं० द्विती० एक० समस्तम् |
| सः | तद्- द्० सर्व० पुं० प्र० एक० | रावणः | अ० पुं० प्र० एक० |
| रावणः | अ० पुं० प्र० एक० | कालचोदितः | अ० पुं० प्र० एक० समस्तम् |
| न | अव्ययम् | जगाम | गम्- कर्तरि लिट् प्रपु० एक० |
| विरोधः | अ० पुं० प्र० एक० | | |
| बलवता | बलवत्- त्० पुं० तृ० एक० | सहमारीचः | अ० पुं० प्र० एक० समस्तम् |
| क्षमः | अ० पुं० प्र० एक० | | |
| रावण | अ० पुं० सम्बो० एक० | तस्य | तद्- द्० सर्व० पुं० ष० एक० |
| तेन | तद्- द्० सर्व० पुं० तृ० एक० | आश्रमपदम् | अ० नपुं० द्विती० एक० समस्तम् |
| ते | तद्- द्० सर्व० पुं० ष० एक० वैकल्पिकं रूपम् | तदा | तद्धितान्तम् अव्ययम् |

**आकाङ्क्षा**

**न क्षमः (अस्ति)।**

| | |
|---|---|
| कः न क्षमः ? | विरोधः न क्षमः। |
| कस्य विरोधः न क्षमः ? | ते (तव) विरोधः न क्षमः। |
| केन सह ते विरोधः न क्षमः ? | तेन (रामेण) ते विरोधः न क्षमः। |
| कीदृशेन तेन ते विरोधः न क्षमः ? | बलवता तेन ते विरोधः न क्षमः। |

**जगाम।**

| | |
|---|---|
| कः जगाम ? | रावणः जगाम। |
| पुनः कथम्भूतः रावणः जगाम ? | सहमारीचः रावणः जगाम। |
| कीदृशः रावणः जगाम ? | कालचोदितः रावणः जगाम। |
| रावणः किं कृत्वा जगाम ? | रावणः अनादृत्य जगाम। |
| किम् अनादृत्य जगाम ? | तद्वाक्यम् अनादृत्य जगाम। |

**अन्वयः**

रावण ! बलवता तेन ते विरोधः न क्षमः (इत्येवं) मारीचेन सुबहुशः वार्यमाणः सः रावणः कालचोदितः (सन्) तद्वाक्यम् अनादृत्य तदा सहमारीचः तस्य आश्रमपदं जगाम।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| रावण ! | हे रावण ! | हे रावण | O Rāvaṇa ! |
| बलवता तेन | शक्तिमता तेन (रामेण) | बलवान् उस (राम) से | with that powerful (Rāma) |
| ते | तव | तुम्हारा | for you |
| विरोधः | द्रोहः | विरोध | to make enemy |
| न क्षमः | न उचितः | उचित नहीं (है) | not advisable |
| मारीचेन | मारीचाख्येन राक्षसेन | मारीच के द्वारा | by Mārīca |
| सुबहुशः | भूयो भूयः | बार-बार | repeadedly |
| वार्यमाणः | निवारितः | रोका गया | discouraged |
| सः रावणः | सः दशाननः | वह रावण | the aforesaid Rāvaṇa |
| कालचोदितः | मृत्युना प्रेरितः | मृत्यु के द्वारा प्रेरित | impelled by death |
| तद्वाक्यम् | तद्वचनम् | उसके वचन को | to his advice |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| अनादृत्य | उपेक्ष्य | अनादृत करके | turning a deaf ear |
| तदा | तदानीम् | तब | then |
| सहमारीचः | मारीचेन सह | मारीच के साथ | along with Mārīca |
| तस्य | रामस्य | राम के | Rāma's |
| आश्रमपदम् | आवासस्थानम् | आश्रम स्थान को | hermitage |
| जगाम | अगच्छत् | गया | proceeded |

**भावार्थः**

**संस्कृतम्**– मारीचः रामेण सह विरोधं कर्तुं रावणं वर्जयन् उक्तवान् "हे दशानन ! शक्तिमता रामेण तव विरोधः तव कल्याणाय न कल्पिष्यते" किन्तु मारीचेन वारितः अपि रावणः मृत्युना प्रेरितः मारीचस्य वचनम् अश्रुतमिव कृत्वा मारीचं नीत्वा पञ्चवटीं गतवान् ।

**हिन्दी**– 'हे रावण राम शक्तिसम्पन्न हैं। उनके साथ तुम्हें विरोध नहीं करना चाहिए'। इस प्रकार मारीच के द्वारा बार-बार मना किए जाने पर भी मृत्य के द्वारा प्रेरित रावण मारीच की बात का अनादर कर मारीच के साथ भगवान् राम की कुटिया पंचवटी गया।

**आंग्लम्**– Though repeatedly discouraged by Mārīca saying, "It is not advisable for you to make enemies with that powerful prince (Śrī Rāma), O Rāvaṇa!" yet turning a deaf ear to his advice and impelled by death, the aforesaid Rāvaṇa, who made people scream (in terror wherever he went out in expedition) then proceeded to the site of Rāma's hermitage alongwith Mārīca.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

| | | |
|---|---|---|
| सुबहुशो मारीचेन | – | सुबहुशः + मारीचेन (विसर्ग-सन्धिः) |
| स रावणः | – | सः + रावणः (विसर्ग-सन्धिः) |
| विरोधो बलवता | – | विरोधः + बलवता (विसर्ग-सन्धिः) |
| क्षमो रावण | – | क्षमः + रावण (विसर्ग-सन्धिः) |
| तद्वाक्यम् | – | तत् + वाक्यम् (जश्त्व-सन्धिः) |
| मारीचस्तस्य | – | मारीचः + तस्य (विसर्ग-सन्धिः) |

तस्याश्रमपदम् – तस्य + आश्रमपदम् (दीर्घ-सन्धिः)

**(ख) समासः**

अनादृत्य – न आदृत्य (नञ्-तत्पु०)

कालचोदितः – कालेन चोदितः (तृ० तत्पु०)

सहमारीचः – मारीचेन सह (बहुव्रीहिः) 'तेन सहेति तुल्ययोगे' इति समासः। 'वोपसर्जनस्य' इति सूत्रेण विकल्पेन सहस्य स आदेशः।

आश्रमपदम् – आश्रमश्च तत् पदम् आश्रमपदम् (कर्मधारयः)

**(ग) कृदन्ताः**

वार्यमाणः – वृ + णिच् + यक् + शानच् (कर्मणि)

अनादृत्य – न + आ + दृ + ल्यप्

चोदितः – चुद् + णिच् + क्त

**(घ) तद्धितान्तौ**

बलवता – बल + मतुप् = बलवत्

तदा – तत् + दा

**(ii) कोशः**

क्षमः – क्षमस्त्रिषु हिते योग्ये युक्ते शक्तौ पटावपि (शब्दरत्नाकरः)

पदम् – पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु (अमरकोशः)

**(iii) समानार्थकाः शब्दाः**

वार्यमाणः – निवार्यमाणः, प्रतिषिध्यमानः, विरुध्यमानः

क्षमः – युक्तः, उचितः

विरोधः – प्रतिवादः, असहमतिः

सुबहुशः – अनेकशः, वारम्वारम्, मुहुर्मुहुः

**अवधेयम्**

**युष्मदः ते-मे इत्यादीनाम् आदेशानां विषये**

## अभ्यासः - 31

### (श्लोकः 50½-51-52½)

1. **पठितश्लोकान् आधृत्य विशेषण-विशेष्य-भाव-सम्बन्धम् उदाहरत–**

[**पठित श्लोकों के आधार पर विशेषण विशेष्यभाव सम्बन्ध का उदाहरण प्रस्तुत करें।** Illustrate the relationship of qualifier and qulaificand on the basis of the verses.]

| **विशेषणम्** | **विशेष्यम्** |
|---|---|
| | |

2. **यथावश्यकं समस्तपदं विग्रहवाक्यं वा लिखत–**

[**आवश्यकता के अनुसार समस्तपद या विग्रहवाक्य लिखें।** Write compound word or analytical sentence as required.]

| | | | | |
|---|---|---|---|---|
| **यथा–** | (क) | कालचोदितः | = | **कालेन चोदितः** |
| | (ख) | कालवशः | = | |
| | (ग) | | = | न आदृत्य |
| | (घ) | अनाहूय | = | |
| | (ङ) | | = | न उक्त्वा |
| | (च) | देवप्रेरितः | = | ............ । |
| | (छ) | | = | मृत्युना प्रेरितः |
| | (ज) | प्रेतप्रेरितः | = | ............ । |
| | (झ) | सहपुरुषः | = | । |
| | (ञ) | | = | जनकेन सह |

3. **प्रस्तुत-श्लोकेषु यस्य सन्धेः आधिक्यम् अस्ति तस्य श्लोकातिरिक्तानि पञ्च उदाहरणानि स्वयमेव लिखत–**

[**श्लोक में जिस सन्धि का आधिक्य है उसका श्लोक के अतिरिक्त पाँच उदाहरण लिखें।** Write five examples of your own of the *sandhi* which is available prominently in the verses.]

(क) (ख)

(ग) (घ)

(ङ)

4. **"जगाम" इत्यस्य सम्बद्धे लकारे धातुरूपं पूरयत–**

[**"जगाम" से सम्बद्ध लकार में धातुरूप पूरा करें।** Complete the verbal forms of the concerned *lakāra* of *'Jagāma'*.]

| | | | |
|---|---|---|---|
| **यथा–** प्रपु० | **जगाम** | **जग्मतुः** | **जग्मुः** |
| मपु० | | | |
| उपु० | | | |

5. **अधोलिखितानां पदानां परिचयं यथानिर्देशं लिखत–**

[**अधोलिखित पदों का परिचय यथानिर्देश प्रस्तुत करें।** Identify the words as directed.]

| | पदम् | प्रातिपदिकम् | लिङ्गम् | विभक्तिः | वचनम् |
|---|---|---|---|---|---|
| **यथा–** (क) | वार्यमाणः | **वार्यमाण** | **पुं.** | **प्र.** | **एक.** |
| (ख) | मारीचेन | | | | |
| (ग) | रावणः | | | | |
| (घ) | वाक्यम् | | | | |
| (ङ) | बलवता | | | | |
| (च) | तेन | | | | |

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[**दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) बहुशः (ख) वार्यमाण (ग) क्षम (घ) अनादृत्य (ङ) ते (तव)

**श्लोकः**

**।**

**तेन मायाविना दूरमपवाह्य नृपात्मजौ ॥ 52 ॥**

**जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ।**

**॥ 53 ॥**

**पदच्छेदः**

.................................................................... ।

तेन मायाविना दूरम् अपवाह्य नृपात्मजौ ॥ 52 ॥

जहार भार्याम् रामस्य गृध्रम् हत्वा जटायुषम् ।

॥ 53 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| तेन | तद्- द्० सर्व० पुं० तृ० एक० | जहार | हृ- कर्तरि लिट् प्रपु० एक० |
| | | भार्याम् | आ० स्त्री० द्विती० एक० |
| मायाविना | मायाविन्- न्० पुं० तृ० एक० | रामस्य | अ० पुं० ष० एक० |
| दूरम् | अ० नपुं० द्विती० एक० | गृध्रम् | अ० पुं० द्विती० एक० |
| अपवाह्य | ल्यबन्तम् अव्ययम् | हत्वा | क्त्वान्तम् अव्ययम् |
| नृपात्मजौ | अ० पुं० द्विती० द्वि० समस्तम् | जटायुषम् | जटायुष्- ष्० पुं० द्विती० एक० |

**आकाङ्क्षा**

**जहार।**

| | |
|---|---|
| कां जहार ? | रामस्य भार्यां जहार। |
| किं कृत्वा जहार ? | नृपात्मजौ दूरम् अपवाह्य जहार। |
| केन अपवाह्य जहार ? | तेन मायाविना (मारीचेन) अपवाह्य जहार। |
| पुनः किं कृत्वा जहार ? | गृध्रं जटायुषं हत्वा जहार। |

**अन्वयः**

(रावणः) तेन मायाविना नृपात्मजौ दूरम् अपवाह्य गृध्रं जटायुषं हत्वा रामस्य भार्यां जहार।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| तेन मायाविना | तेन मायिकेन | उस मायावी के द्वारा | by the wily (Mārīca) |
| नृपात्मजौ | राजपुत्रौ | दोनों राजपुत्रों को | two princes (Rāma and Lakṣmaṇa) |
| दूरम् | दूरदेशम् | दूर स्थान में | afar |
| अपवाह्य | अपसार्य | हटाकर | having removed |
| गृध्रं जटायुषम् | जटायुषनामकं गृध्रम् | जटायु नामक गीध को | the valture Jaṭāyu by name |
| हत्वा | मारयित्वा | मारकर | having killed |
| रामस्य | रामस्य | राम की | Rāma's |
| भार्याम् | पत्नीम् | पत्नी को | wife |
| जहार | अपहृतवान् | चुरा ले गया | stole away |

**भावार्थः**

**संस्कृतम्**— रावणः मारीचेन रामलक्ष्मणौ दूरं नायथित्वा गृध्रं जटायुषं च मारयित्वा सीताम् अपहृतवान् ।

**हिन्दी**— रावण ने मायावी मारीच के द्वारा राम एवं लक्ष्मण को दूर हटाकर गृध्र जटायु को मारकर सीता का अपहरण कर लिया।

**आंग्लम्**— Having caused the two princes (Rāma and Lakṣmaṇa) to be removed afar (from the hermitage by the wily Mārīca, he stole away Śrī Rāma's spouse (Sītā), killing the vulture Jaṭāyu (who tried to intercept him and thereby deliver Sītā from his clutches.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

नृपात्मजौ – नृप + आत्मजौ (दीर्घसन्धिः)

(ख) **समासः**

नृपात्मजौ – आत्मनः जायते इति आत्मजः (उपपद तत्पु०); नृपस्य आत्मजौ नृपात्मजौ (ष० तत्पु०)

(ग) **कृदन्ताः**

अपवाह्य - अप + वह् + णिच् + ल्यप्

हत्वा - हन् + क्त्वा

आत्मजः - आत्मन् + जन् + ड

(घ) **तद्धितान्तः**

मायाविना - माया + विनि (अस्मायामेधास्रजो विनिः) = मायाविन्

**अवधेयम्**

**अण्यन्तकर्तुः ण्यन्ते विभक्तिविषये**

---

## अभ्यासः - 32

**(श्लोकः 52½-53½)**

1. **मञ्जूषायां प्रदत्तैः पदैः रिक्तस्थानानि पूरयत–**

[**मञ्जूषा में प्रदत्त पदों से रिक्त स्थान भरें।** Fill in the blanks with the words given in the box.]

**जहार, मायाविना, गृध्रं, दूरम्, रामस्य**

रावणः तेन ............ नृपात्मजौ ............ अपवाह्य ............ जटायुषं हत्वा ............ भार्यां ............ ।

2. **यथोदाहरणम् अनुलेखनं कुरुत–**

[**उदाहरण के अनुसार अनुलेखन करें।** Continue writing as shown in the example.]

**यथा–** (क) मायाविना = **मायाविन्** (**तृतीया-एकवचनम्**)

(ख) तपस्विना = ............ (............)

(ग) मनस्विना = ............ (............)

(घ) ज्ञानिना = ............ (............)

(ङ) ............ = मानिन् (तृतीया एकवचनम्)

(च) ............ = आचारशालिन् (तृतीया एकवचनम्)

(छ) ............ = मेधाविन् (तृतीया एकवचनम्)

3. **यथोचितं योजयत—**

[ **यथायोग्य जोड़ें।** Match with appropriate one.]

| | | | |
|---|---|---|---|
| (i) | नृपात्मजौ | (क) | अपसार्य |
| (ii) | जहार | (ख) | राजपुत्रौ |
| (iii) | अपवाह्य | (ग) | हृतवान् |
| (iv) | हत्वा | (घ) | इच्छानुरूप-रूपधारिणा |
| (v) | मायाविना | (ङ) | व्यापाद्य |

4. **'जटायुष्'-शब्दस्य रूपाणि पूरयत—**

[ **'जटायुष्' शब्द का रूप पूरा करें।** Complete the declension.]

| | **एक.** | **द्वि.** | **बहु.** |
|---|---|---|---|
| प्रथमा | | | |
| द्वितीया | जटायुषम् | | |
| तृतीया | जटायुषा | | |
| चतुर्थी | | | जटायुर्भ्यः |
| पञ्चमी | | | |
| षष्ठी | | जटायुषोः | |
| सप्तमी | जटायुषि | | |
| सम्बोधनम् | | | |

5. **धातुं निर्दिशत—**

[ **मूलधातु का निर्देश करें।** Identify the basic root.]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| **यथा—** (क) | जहार | = | हृ | (ख) | बभार | = | |
| (ग) | चकार | = | | (घ) | ससार | = | |
| (ङ) | ततार | = | | (च) | ममार | = | |

**श्लोकः**

।

**गृध्रं च निहतं दृष्ट्वा हतां श्रुत्वा च मैथिलीम् ॥ 53 ॥**

**राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ।**

**॥ 54 ॥**

**पदच्छेदः**

।

गृध्रम् च नि-हतम् दृष्ट्वा हतां श्रुत्वा च मैथिलीम् ॥ 53 ॥

राघवः शोक-सन्तप्तः वि- ललाप आकुलेन्द्रियः ।

.................................................................................................... ॥ 54 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| गृध्रम् | अ० पुं० द्विती० एक० | मैथिलीम् | ई० स्त्री० द्विती० एक० |
| च | अव्ययम् | राघवः | अ० पुं० प्र० एक० |
| निहतम् | अ० पुं० द्विती० एक० | शोकसंतप्तः | अ० पुं० प्र० एक० समस्तम् |
| दृष्ट्वा | क्त्वान्तम् अव्ययम् | विललाप | वि+लप् कर्तरि लिट् |
| हताम् | आ० स्त्री० द्विती० एक० | | प्रपु० एक० |
| श्रुत्वा | क्त्वान्तम् अव्ययम् | आकुलेन्द्रियः | अ० पुं० प्र० एक० समस्तम् |

**आकाङ्क्षा**

**विललाप ।**

| | |
|---|---|
| कः विललाप ? | राघवः विललाप । |
| कीदृशः राघवः विललाप ? | शोकसन्तप्तः राघवः विललाप । |
| पुनश्च कीदृशः राघवः ? | आकुलेन्द्रियः । |
| किं कृत्वा विललाप ? | दृष्ट्वा विललाप । |
| किं दृष्ट्वा विललाप ? | निहतं दृष्ट्वा विललाप । |
| कं निहतं दृष्ट्वा ? | गृध्रं निहतं दृष्ट्वा । |
| पुनः किं कृत्वा विललाप ? | श्रुत्वा विललाप । |

| | |
|---|---|
| किं श्रुत्वा ? | हृतां श्रुत्वा। |
| कां हृतां श्रुत्वा विललाप ? | मैथिलीं हृतां श्रुत्वा विललाप। |

**अन्वयः**

गृध्रं च निहतं दृष्ट्वा मैथिलीं च हृतां श्रुत्वा शोकसन्तप्तः आकुलेन्द्रियः राघवः विललाप।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| गृध्रं च | दाक्षाय्यं च | और गीध को | and the vulture |
| निहतम् | मरणासन्नम् | मरणासन्नम् | mortally wounded |
| दृष्ट्वा | अवलोक्य | देखकर | having seen |
| मैथिलीम् | सीताम् | सीता को | Maithilī (Sītā) |
| च | अपि | भी | also |
| हृताम् | चोरिताम् | अपहृता | forcibly carried off |
| श्रुत्वा | आकर्ण्य | सुनकर | having heard |
| शोकसन्तप्तः | दुःखितः | दुःखित | tormented with grief |
| आकुलेन्द्रियः | व्यथितः | व्यथित | mind agitated |
| राघवः | रामः | राम (ने) | a scion of Raghu |
| विललाप | रुरोद | विलाप किया | wailed loudly |

**भावार्थः**

**संस्कृतम्**— जटायुषम् हतम् अवलोक्य तस्य मुखात् एव 'सीता अपहृता' इति च आकर्ण्य रामः शोकाकुलः व्यथितः सन् रुरोद।

**हिन्दी**— गृध्र जटायु को घायल देखकर तथा उसके मुख से सीता के अपहरण के समाचार को जानकर श्रीराम शोक सन्तप्त एवं व्यथित होकर रोने लगे।

**आंग्लम्**— Now tormented with grief to perceive the vulture mortally wounded and to hear (from it) of Sītā (the princess of Mithilā) having been forcibly carried off (by Rāvaṇa), Śrī Rāma (a scion of Raghu) loudly wailed, his mind agitated (through perturbation).

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| शोकसन्तप्तो विललाप | – | शोकसन्तप्तः + विललाप (विसर्ग-सन्धिः) |
| विललापाकुलेन्द्रियः | – | विललाप + आकुलेन्द्रियः (दीर्घ-सन्धिः) |
| आकुलेन्द्रियः | – | आकुल + इन्द्रियः (गुण-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| शोकसन्तप्तः | – | शोकेन + सन्तप्तः (तृ० तत्पु०) |
| आकुलेन्द्रियः | – | आकुलानि इन्द्रियाणि यस्य (बहुव्रीहिः) |

(ग) **कृदन्ताः**

| | | |
|---|---|---|
| निहतम् | – | नि + हन् + क्त = निहत |
| दृष्ट्वा | – | दृश् + क्त्वा |
| हृताम् | – | हृ + क्ता + टाप् = हृता |
| श्रुत्वा | – | श्रु + क्त्वा |
| सन्तप्तः | – | सम् + तप् + क्त = सन्तप्त |

(घ) **तद्धितान्तौ**

| | | |
|---|---|---|
| मैथिलीम् | – | मैथिल + अण् + ङीप् = मैथिली |
| राघवः | – | रघु + अण् (तस्यापत्यम्) |

(ii) **कोशः**

| | | |
|---|---|---|
| विलापः | – | विलापः परिदेवनम् (अमरकोशः) |

**अवधेयम्**

**क्त्वा-विषये**

## अभ्यासः - 33

### (श्लोकः 53½-54½)

1. **यथोदाहरणं रिक्तस्थानं पूरयत–**

[**उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as shown in the example.]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| **यथा–** | (क) | निहता | = | **नि + हन्** | + | **क्त + टाप्** | (**कृदन्तः**) |
| | (ख) | मैथिली | = | | + | | (..........) |
| | (ग) | श्रुत्वा | = | | + | | (..........) |
| | (घ) | | = | यश् | + | विनि | (तद्धितान्तः) |
| | (ङ) | | | हृ | + | क्त + टाप् | (..........) |
| | (च) | सन्तप्त | = | | + | | (..........) |
| | (छ) | प्रदीप्त | = | | + | | (कृदन्तः) |
| | (ज) | | = | सम् + दीप् | + | क्त | (..........) |
| | (झ) | | = | परा + हन् | + | क्त | (..........) |
| | (ञ) | पराजित | = | | + | | (कृदन्तः) |

2. **समासनामोल्लेखपूर्वकं समस्तपदस्य विग्रहं लिखत–**

[**समास नाम बताते हुए समस्तपद का विग्रह लिखें।** Write the analytical sentence of the compound-word along with the compound-name.]

**यथा–** (क) आकुलेन्द्रियः = **आकुलानि इन्द्रियाणि यस्य (बहुव्रीहिः)**

(ख) जितेन्द्रियः =

(ग) शोकसन्तप्तः =

(घ) निदाघतप्तः =

(ङ) रोगपीडितः =

(च) पीताम्बरः =

(छ) चन्द्रशेखरः =

3. **रिक्तस्थानं पूरयत–**

[**रिक्तस्थान की पूर्ति करें।** Fill in the blanks.]

(क) **विललाप** = विलपनं कृतवान्

(ख) = रोदनं कृतवान्

(ग) = गमनं कृतवान्

(घ) = भ्रमणं कृतवान्

(ङ) = दहनं कृतवान्

(च) = हननं कृतवान्

4. **श्लोकस्थानि द्वितीयान्त-पदानि सङ्कलय्य लिङ्गानुसारं विभजत–**

[**श्लोकस्थ द्वितीयान्त पदों का संग्रह कर लिङ्गानुसार वर्गीकृत करें।** Compile the words ending in accusative case-ending and classify them as per the gender.]

5. **कर्मणि / कर्तरि / भावे यथानिर्देशं परिवर्तयत–**

[**यथा निर्देश वाच्य परिवर्तन करें।** Change the voice as required.]

(क) रामः गृध्रं निहतं दृष्टवान्। (कर्तरि)

। (कर्मणि)

(ख) रामः मैथिलीं हृतां श्रुतवान्। (कर्तरि)

। (कर्मणि)

(ग) शोकसन्तप्तः रामः विललाप। (कर्तरि)

............................................। (भावे)

(घ) रामेण रावणः हतः। (कर्मणि)

। (कर्तरि)

(ङ) हनुमता लङ्का दग्धा। (कर्मणि)

। (कर्तरि)

(च) बालकेन हसितम्। (भावे)

............................................। (कर्तरि)

**श्लोकः**

।

**ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ 54 ॥**

**मार्गमाणो वने सीतां राक्षसं संददर्श ह।**
**कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ 55 ॥**

**पदच्छेदः**

।

ततः तेनैव शोकेन गृध्रम् दग्ध्वा जटायुषम् ॥ 54 ॥

मार्गमाणः वने सीताम् राक्षसम् सं-ददर्श ह।
कबन्धम् नाम रूपेण वि-कृतम् घोर-दर्शनम् ॥ 55 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | तद्धितान्तम् अव्ययम् | सीताम् | आ० स्त्री० द्वितीo एक० |
| तेन | तद्- द्० सर्व० पुं० तृ० एक० | राक्षसम् | अ० पुं० द्वितीo एक० |
| | | संददर्श | सम्+दृश्- कर्तरि लिट् प्रपु० एक० |
| एव | अव्ययम् | | |
| शोकेन | अ० पुं० तृ० एक० | ह | अव्ययम् |
| गृध्रम् | अ० पुं० द्वितीo एक० | कबन्धम् | अ० पुं० द्वितीo एक० |
| दग्ध्वा | क्त्वान्तम् अव्ययम् | नाम | अव्ययम् |
| जटायुषम् | जटायुष्- ष्० पुं० द्वितीo एक० | रूपेण | अ० नपुं० तृ० एक० |
| | | विकृतम् | अ० पुं० द्वितीo ए० |
| मार्गमाणः | अ० पुं० प्र० एक० | घोरदर्शनम् | अ० पुं० द्वितीo एक० समस्तम् |
| वने | अ० नपुं० स० एक० | | |

**आकाङ्क्षा**

**(राघवः) सन्ददर्श।**

कीदृशः (रामः) ? — तेनैव शोकेन (युक्तः)।

पुनः कीदृशः ? — वने सीतां मार्गमाणः राघवः।

| | |
|---|---|
| कं ददर्श ? | कबन्धं नाम राक्षसं सन्ददर्श। |
| कीदृशं कबन्धं ददर्श ? | घोरदर्शनं कबन्धं सन्ददर्श। |
| पुनः कीदृशं कबन्धम् ? | रूपेण विकृतं कबन्धं ददर्श। |
| किं कृत्वा कबन्धं ददर्श ? | गृध्रं जटायुषं दग्ध्वा कबन्धं ददर्श। |

**अन्वयः**

ततः तेन एव शोकेन (युक्तः राघवः) गृध्रं जटायुषं दग्ध्वा वने सीतां मार्गमाणः रूपेण विकृतं घोरदर्शनं कबन्धं नाम राक्षसं सन्ददर्श ह।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तदनन्तरम् | उसके बाद | then |
| तेन एव शोकेन | तेन एव दुःखेन | उसी शोक से | in that very state of grief |
| राघवः | रामः | राम (ने) | a scion of Raghu |
| गृध्रम् | दाक्षाय्यम् | गिद्ध | the vulture |
| जटायुषम् | जटायुष्-नामानम् | जटायु (का) | Jaṭāyu by name |
| दग्ध्वा | अग्नये समर्प्य | दाह संस्कार करके | having cremated |
| वने | विपिने | वन में | in the forest |
| सीताम् | मैथिलीम् | सीता को | Sītā |
| मार्गमाणः | अन्विष्यन् | खोजते हुए | hunting up |
| घोरदर्शनम् | भयोत्पादकम् | भयङ्कर | having terrible look |
| रूपेण विकृतम् | आकारेण विकृतिसम्पन्नम् | रूप से विकृत | deformed of body |
| कबन्धं नाम | कबन्धनामकम् | कबन्ध नामक | kabandha by name |
| राक्षसम् | दानवम् | राक्षस को | demon |
| सन्ददर्श | अवलोकितवान् | देखा | saw |
| ह | (प्रसिद्धौ) | (प्रसिद्धार्थक अव्यय) | so the tradition goes |

**भावार्थः**

**संस्कृतम्**— तदनन्तरं सीतायाः अपहरणजनितेन वृत्तेन शोकाकुलः श्रीरामः जटायुषः मृत-शरीरम् अग्नौ समर्प्य वने सीताम् अन्विष्यन् भयङ्करं रूपेण विकृतञ्च कबन्धनामकं राक्षसं दृष्टवान्।

**हिन्दी**— उसके बाद उसी शोक (सीता के अपहरण) से युक्त श्रीराम ने जटायु के शव का दहन कर सीता को जंगल में खोजते हुए भयङ्कर एवं विकृत रूपवाले कबन्ध नामक राक्षस को देखा।

**आंग्लम्**— Then, having cremated the vulture Jaṭāyu and hunting up Sītā in the forest in that very state of grief, Śrī Rāma descried an ogre, Kabandha by name, who was deformed of body and terrible to look at.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

ततस्तेनैव – ततः + तेनैव (विसर्ग-सन्धिः)

तेनैव – तेन + एव (वृद्धि-सन्धिः)

मार्गमाणो वने – मार्गमाणः + वने (विसर्ग-सन्धिः)

(ख) **समासः**

घोरदर्शनम् – घोरं दर्शनं यस्य सः घोरदर्शनः (बहुव्रीहिः) तम्

(ग) **कृदन्ताः**

दग्ध्वा – दह् + क्त्वा

मार्गमाणः – मार्ग् + शानच् (आधृषाद्वा इति विकल्पात् णिजभावः। णिच् पक्षे मार्गयमाणः)

विकृतम् – वि + कृ + क्त

घोरदर्शनम् – घोर + दृश् + ल्युट्

## अभ्यासः – 34

### (श्लोकः $54^1/_2$-55)

1. **उत्तरं लिखत–**

[**उत्तर लिखें।** Write the answer.]

(क) "तेनैव शोकेन" इत्यस्मात् केन शोकेन इति बोधः भवति ? ।

(ख) जटायुषं कः दग्धवान् ? ............................................................ ।

(ग) कः रूपेण विकृतः आसीत् ? ।

(घ) कां मार्गमाणः रामः राक्षसं ददर्श ? ।

(ङ) रामः कं कीदृशं च राक्षसं ददर्श ? ।

2. **श्लोके मुख्यं क्रियापदं किम् अस्ति तस्य परिचयं लिखत–**

[**श्लोक में मुख्य क्रियापद क्या है, उसका परिचय लिखें।** Which is the main verbal form of the verse Identify it.]

3. **शब्दरूपं पूरयत–**

[**शब्दरूप पूरा करें।** Complete the declension.]

**यथा–** (क) राक्षसम् ......**राक्षसौ**...... ......**राक्षसान्**......

(ख) सीताम्

(ग) वने

(घ) गृध्रम्

(ङ) तेन

(च) रूपेण

4. **अधोलिखितपदानां प्रकृतिं प्रत्ययं च निर्दिशत–**

[**अधोलिखित पदों का प्रकृति प्रत्यय लिखें।** Write the base and the suffix of the following.]

| | | | | | |
|---|---|---|---|---|---|
| **यथा–** (क) | मार्गमाणः | ......**मार्ग**...... | + | ......**शानच्**...... | ( **कर्तरि** ) |
| (ख) | वर्धमानः | | + | | (..................) |
| (ग) | पठ्यमानः | ......**पठ् + य**...... | + | ......**शानच्**...... | (......**कर्मणि**......) |

(घ) दृश्यमानः + (..................)

(ङ) गम्यमानः + (..................)

5. **यथाश्लोकं योजयत–**

[ **श्लोकानुसार जोड़ें।** Match with the appropriate one.]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | कबन्धम् | (क) | शोकेन |
| (ii) | सीताम् | (ख) | दग्ध्वा |
| (iii) | तेनैव | (ग) | मार्गमाणः |
| (iv) | जटायुषम् | (घ) | घोरदर्शनम् |
| (v) | रूपेण | (ङ) | विकृतम् |

6. **दृश्-धातोः लिट्-लृट्-लकारयोः रूपाणि पूरयत-**

[ **दृश् धातु के लिट् एवं लृट् लकार के रूपों को लिखें।** Fill in the blanks with the conjection of Dṛś-lit-ḷṭ lakāras.]

| **लिटि** | | | **लृटि** | | |
|---|---|---|---|---|---|
| ददर्श | ददृशतुः | | द्रक्ष्यति | | |
| | | ददृश | | | |
| | | ददृशिम | | | |

7. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) ततः (ख) दग्ध्वा (ग) मार्गमाण (घ) मार्ग (लटि) (ङ) विकृत

**श्लोकः**

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।
स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ 56 ॥

श्रमणां धर्मनिपुणामभिगच्छेति राघव ।
॥ 57 ॥

**पदच्छेदः**

तम् निहत्य महा-बाहुः ददाह स्वः गतः च सः ।
स च अस्य कथयामास शबरीम् धर्म-चारिणीम् ॥ 56 ॥

श्रमणाम् धर्म-निपुणाम् अभि-गच्छ इति राघव ।
॥ 57 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| तम् | तद्- द्० सर्व० पुं० द्विती० एक० | कथयामास | कथ+णिच्- कर्तरि लिट् प्रपु० एक० |
| निहत्य | ल्यबन्तम् अव्ययम् | शबरीम् | ई० स्त्री० द्विती० एक० |
| महाबाहुः | उ० पुं० प्र० एक० समस्तम् | धर्मचारिणीम् | ई० स्त्री० द्विती० एक० समस्तम् |
| ददाह | दह्- कर्तरि लिट् प्रपु० एक० | श्रमणाम् | आ० स्त्री० द्विती० ए० |
| स्वर् | अव्ययम् | धर्मनिपुणाम् | आ० स्त्री० द्विती० एक० समस्तम् |
| गतः | अ० पुं० प्र० एक० | | |
| च | अव्ययम् | अभिगच्छ | अभि + गम्- कर्तरि **लोट्** प्रपु० एक० |
| सः | तद्- द्० सर्व० पुं० प्र० एक० | इति | अव्ययम् |
| अस्य | इदम्- म्० सर्व० पुं० प्र० **एक०** | राघव | अ० पुं० सम्बो० प्र० **एक०** |

**आकङ्क्षा**

**ददाह।**

| | |
|---|---|
| कः ददाह ? | महाबाहुः (राघवः) ददाह। |
| (राघवः) कं ददाह ? | तं (कबन्धं) ददाह। |
| महाबाहुः राघवः किं कृत्वा तं ददाह ? | तं हत्वा ददाह |
| हतः सः कबन्धः कुत्र गतः ? | सः कबन्धः स्वः गतः। |
| स्वर्गतः च सः किं कथयामास ? | राघव ! धर्मचारिणीं धर्मनिपुणां श्रमणां शबरीम् अभिगच्छ इति कथयामास। |
| सः कबन्धः धर्मचारिणीं शबरीं कस्य कथयामास ? | अस्य (राघवस्य) कथयामास। |

**अन्वयः**

महाबाहुः (राघवः) कबन्धं निहत्य तं ददाह। सः च कबन्धः स्वः गतः। राघव! धर्मनिपुणां धर्मचारिणीं श्रमणां शबरीम् अभिगच्छ इति सः (कबन्धः) अस्य कथयामास।

**पदार्थः**

| **पदम्** | **संस्कृतम्** | **हिन्दी** | **आंग्लम्** |
|---|---|---|---|
| महाबाहुः | विशालबाहुः (राघवः) | लम्बी भुजाओं वाले राम ने | the mighty armed Rāma |
| कबन्धम् | कबन्ध-नामकं राक्षसम् | कबन्ध को | to Kabandha |
| निहत्य | मारयित्वा | मारकर | having killed |
| तम् | कबन्धम् | उसको | him |
| ददाह | दग्धवान् | दहन किया | cremated |
| स च कबन्धः | पूर्वोक्तः कबन्धः | और वह कबन्ध | and that Kabandha |
| स्वः | स्वर्गलोकम् | स्वर्ग | to heaven |
| गतः | गतवान् | चला गया | ascended |
| राघव ! | हे राम ! | हे राम ! | O Rāma ! |
| धर्मनिपुणाम् | धर्मकुशलाम् | धर्मशीला | well-versed in the principles of right pousness |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| धर्मचारिणीम् | धर्माचरणशीलाम् | धर्माचरण करने वाली | to pious |
| श्रमणाम् | परिव्राजिकाम् | सन्यासिनी | hermitess |
| शबरीम् | शबरी-नामधेयाम् | शबरी (के पास) | Śabari |
| अभिगच्छ इति | याहि इत्येवम् | जाओ, ऐसा | 'seek for' |
| सः | कबन्धः | कबन्ध ने | he (Kabandha) |
| अस्य | अस्य रामस्य | राम को | to Rāma |
| कथयामास | कथितवान् | कहा | said |

**भावार्थः**

**संस्कृतम्**— दीर्घभुजः रामचन्द्रः घोरदर्शनं कबन्धं मारयित्वा अग्नौ अदहत्। स च कबन्धः पार्थिवं शरीरं त्यक्त्वा स्वर्गयोग्यं गन्धर्वरूपं प्राप्तवान्। ततः स्वर्गं गच्छन् सः कबन्धः रामाय धर्मचारिणीं शबरीम् अभिगच्छ इति उक्तवान्।

**हिन्दी**— महाबाहु रामचन्द्र ने कबन्ध नामक राक्षस को मारकर उसे अग्नि में जला दिया। वह कैबन्ध नश्वर शरीर को छोड़कर स्वर्ग के योग्य गन्धर्व रूप धारण कर लिया। उसके बाद **स्वर्ग** जाते हुए उसने श्रीराम से निवेदन किया हे राम! आप धर्मचारिणी शबरी के पास जाएँ।

**आंग्लम्**— Having made short work of him, the mighty-armed prince cremated him (too) and the demon (regained his original form of a Gandharva and) ascended to heaven. Nay, (while rising to heaven) he said to Śrī Rāma, "Seek, O Rāma (a scion of Raghu), Śabarī, a pious hermitess, who is will-versed in the principles of righteousness."

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

| | | |
|---|---|---|
| महाबाहुर्ददाह | – | महाबाहुः + ददाह (विसर्ग-सन्धिः) |
| स्वर्गतश्च | – | स्वर्गतः + च (विसर्ग-सन्धिः) |
| स्वर्गतः | – | स्वः + गतः (विसर्ग-सन्धिः) |
| चास्य | – | च + अस्य (दीर्घ-सन्धिः) |
| अभिगच्छेति | – | अभिगच्छ + इति (गुण-सन्धिः) |
| स च | – | सः + च (विसर्ग-सन्धिः) |

**(ख) समासः**

| | | |
|---|---|---|
| महाबाहुः | – | महान्तौ बाहू यस्य (बहुव्रीहिः) |
| धर्मचारिणीम् | – | धर्मं चरति इति धर्मचारिणी (उपपद-तत्पु०) ताम् |
| धर्मनिपुणाम् | – | धर्मे निपुणा धर्मनिपुणा (सप्तमी-तत्पु०) ताम् |

**(ग) कृदन्ताः**

| | | |
|---|---|---|
| निहत्य | – | नि + हन् + ल्यप् |
| धर्मचारिणीम् | – | धर्म + चर + णिनि (इन्) + ङीप् |
| गतः | – | गम् + क्त |
| श्रमणा | – | श्रम् + ल्यु + टाप् (कर्तरि) |

**(घ) तद्धितान्तः**

| | | |
|---|---|---|
| राघव | – | रघु + अण् (रघोः अपत्यं पुमान् राघवः, तस्यापत्यम् इति सूत्रेण अण्) |

---

## अभ्यासः - 35

**(श्लोकः 56½-57)**

1. **श्लोकात् स्त्रीलिङ्गं पदं चित्वा तत्र प्रयुक्तं प्रत्ययं निर्दिशत–**

[**श्लोक से स्त्रीलिङ्ग पदों को चुनकर उनके प्रत्ययों का निर्देश करें।** Compile the words ending in feminine gender from the verse and point out the suffix therein.]

2. **प्रकृतिप्रत्ययविभागं कुरुत–**

[**प्रकृति-प्रत्यय विभाग निर्देश करें।** Split the base and the suffix.]

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| **यथा–** | (क) | निहत्य | = | **नि** | + | **हन्** | + | **ल्यप्** |
| | (ख) | विलोक्य | = | | + | | + | |
| | (ग) | अवलोक्य | = | | + | | + | |
| | (घ) | निर्वाप्य | = | | + | | + | |

(ङ) निर्गम्य = + +

(च) उपविश्य = + +

3. **विग्रहवाक्यं लिखत–**

[ **विग्रह लिखें।** Wrtie the analytical sentence.]

**यथा–** (क) महाबाहुः = **महान्तौ बाहू यस्य सः**

(ख) तीक्ष्णमतिः =

(ग) सत्यसन्धः =

(घ) काषायाम्बरः =

(ङ) चन्द्रमुखी =

(च) राजीवलोचनः =

(छ) कृशोदरी =

4. **समानार्थ-शब्दं लिखत–**

[ **समानार्थक शब्द लिखें।** Write the synonyms.]

**यथा–** (क) निहत्य **मारयित्वा**

(ख) कथयामास

(ग) शबरीम्

(घ) महाबाहुः

(ङ) धर्मचारिणीम्

5. **समस्तपदं लिखत–**

[ **समस्तपद लिखें।** Write the compound-word.]

**यथा–** (क) धर्मे निपुणः **धर्मनिपुणः**

(ख) कर्मणि निपुणः

(ग) ज्ञाने निपुणः

(घ) व्याख्याने निपुणः

(ङ) व्यवहारे चतुरः

**श्लोकः**

।

सोऽभ्यगच्छत् महातेजाः शबरीं शत्रुसूदनः ॥ 57 ॥

शबर्या पूजितः सम्यग् रामो दशरथात्मजः ।

॥ 58 ॥

**पदच्छेदः**

.............................................................................................................. ।

सः अभ्यगच्छत् महा-तेजाः शबरीम् शत्रु-सूदनः ॥ 57 ॥

शबर्या पूजितः सम्यक् रामः दशरथात्मजः ।

॥ 58 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सः | तद्- द्० सर्व० पुं० प्र० एक० | शत्रुसूदनः | अ० पुं० प्र० एक० समस्तम् |
| | | शबर्या | ई० स्त्री० तृ० एक० |
| अभ्यगच्छत् | अभि + गम्- कर्तरि लङ् प्रपु० एक० | पूजितः | अ० पुं० प्र० एक० |
| | | सम्यक् | अव्ययम् |
| महातेजाः | महातेजस्- स्० पुं० प्र० एक० समस्तम् | रामः | अ० पुं० प्र० एक० |
| | | दशरथात्मजः | अ० पुं० प्र० एक० समस्तम् |
| शबरीम् | ई० स्त्री० द्विती० एक० | | |

**आकाङ्क्षा**

**अभ्यगच्छत्।**

| | |
|---|---|
| कः अभ्यगच्छत् ? | सः (रामः) अभ्यगच्छत् । |
| सः (रामः) कीदृशः ? | महातेजाः । |
| पुनः सः कीदृशः ? | शत्रुसूदनः । |
| कुत्र अभ्यगच्छत् ? | शबरीम् अभ्यगच्छत् । |

**पूजितः।**

| | |
|---|---|
| कः पूजितः ? | रामः पूजितः । |

| | |
|---|---|
| कः रामः पूजितः ? | दशरथात्मजः रामः पूजितः । |
| कया पूजितः ? | शबर्या पूजितः । |
| कथं पूजितः ? | सम्यक् पूजितः । |

**अन्वयः**

सः महातेजाः शत्रुसूदनः शबरीम् अभ्यगच्छत् । दशरथात्मजः रामः शबर्या सम्यक् पूजितः ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सः | सः रामः | वह राम | he (Rāma) |
| महातेजाः | महौजाः | अत्यन्त तेजस्वी | the highly glorious |
| शत्रुसूदनः | शत्रुहन्ता | शत्रुओं के विनाशक | the destroyer of foes |
| शबरीम् | शबरीनामिकां परिव्राजिकाम् | शबरी (के पास) | to Śabarī |
| अभ्यगच्छत् | गतवान् | गया | approached |
| दशरथात्मजः | दाशरथिः | दशरथ पुत्र | the son of Daśaratha |
| रामः | राघवः | राम | Śrī Rāma by name |
| शबर्या | शबरी-नामिकया परिव्राजिकया | शबरी के द्वारा | by Śabarī |
| सम्यक् | सुष्ठु | भली-भाँति | duly |
| पूजितः | अर्चितः | पूजित हुए | worshipped |

**भावार्थः**

**संस्कृतम्**– सः महावीर्यवान् शत्रुहन्ता रामः शबरीं गतवान् तया रामः सम्यक् अर्चितः ।

**हिन्दी**– महातेजस्वी शत्रुनाशक श्री राम शबरी के पास गए और शवरी के द्वारा श्री राम भली-भाँति पूजित हुए ।

**आंग्लम्**– The highly glorious Rāma, the destroyer of his foes approached Śabarī and was duly wershiped by her.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| सोऽभ्यगच्छत् | – | सः + अभ्यगच्छत् (विसर्ग-सन्धिः पूर्वरूप-सन्धिः च) |
| अभ्यगच्छन्महातेजाः | – | अभ्यगच्छत् + महातेजाः (अनुनासिक-सन्धिः) |
| सम्यग्रामः | – | सम्यक् + रामः (जश्त्व-सन्धिः) |
| दशरथात्मजः | – | दशरथ + आत्मजः (दीर्घ-सन्धिः) |
| रामो दशरथात्मजः | – | रामः + दशरथात्मजः (विसर्ग-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| महातेजाः | – | महत् तेजः यस्य सः (बहुव्रीहिः) |
| शत्रुसूदनः | – | शत्रूणां सूदनः (ष० तत्पु०) |
| दशरथात्मजः | – | दशरथस्य आत्मजः (ष० तत्पु०) |
| आत्मजः | – | आत्मनः जायते (उपपद-तत्पु०) |

(ग) **कृदन्ताः**

| | | |
|---|---|---|
| शत्रुसूदनः | – | सूद् + ल्युट् = सूदन |
| पूजितः | – | पूज् + क्त = पूजितः |
| आत्मजः | – | आत्मन् + जन् + ड (जनेर्डः) |

(ii) **पर्यायवाचिनः शब्दाः**

| | | | |
|---|---|---|---|
| (क) | आत्मजः | – | तनयः, सूनुः, सुतः, पुत्रः |
| (ख) | शत्रुः | – | रिपुः, वैरी, अरिः, दुर्हृत्, द्विट् |
| (ग) | निपुणः | – | प्रवीणः, अभिज्ञः, कुशलः, पटुः, निष्णातः |

## अभ्यासः - 36

### (श्लोकः $57^1/_2$-$58^1/_2$)

1. **अत्र प्रदत्तानां पदानाम् अन्यवचनयोः रूपाणि लिखत–**
[ **अधोलिखित पदों के अन्य रूप लिखें।** Complete the declension of the following words.]

| | | एक. | द्वि. | बहु. | (विभक्तिः) |
|---|---|---|---|---|---|
| यथा– | (क) | शबर्या | **शबरीभ्याम्** | **शबरीभिः** | (**तृतीया**) |
| | (ख) | सः | | | (..........) |
| | (ग) | महातेजाः | | | (..........) |
| | (घ) | शबरीम् | | | (..........) |
| | (ङ) | वानरेण | | | (..........) |
| | (च) | पूजितः | | | (..........) |

2. **अत्रलिखितानां प्रश्नानाम् उत्तराणि लिखत–**
[ **अधोलिखित प्रश्नों के उत्तर लिखें।** Answer the following questions.]

(क) श्लोके 'महातेजाः' इति कस्य विशेषणम् ? .................... ।
(ख) शत्रुसूदनः कः ? .................... ।
(ग) शबर्या कः पूजितः ? .................... ।
(घ) रामः काम् अभ्यगच्छत् ? .................... ।

3. **विसन्धिं कुरुत–**
[ **सन्धिविच्छेद करें।** Disjoin the sandhi.]

| | | | | | | |
|---|---|---|---|---|---|---|
| यथा– | (क) | सम्यग्रामः | = | **सम्यक्** | + | **रामः** |
| | (ख) | सम्यग्रात्रिः | = | | + | |
| | (ग) | सम्यगागतः | = | | + | |
| | (घ) | दशरथात्मजः | = | | + | |
| | (ङ) | नृपात्मजः | = | | + | |
| | (च) | रावणात्मजः | = | | + | |
| | (छ) | रामात्मजः | = | | + | |

4. **समानार्थकं शब्दं लिखत–**

[ **समानार्थक शब्द लिखें।** Write the synonyms.]

**यथा–** (क) दशरथात्मजः = ......**दशरथपुत्रः**......

(ख) अर्जुनात्मजः =

(ग) शत्रुसूदनः =

(घ) मधुसूदनः =

(ङ) रिपुनिषूदनः =

(च) महातेजाः =

(छ) महात्मा =

5. **कोष्ठकस्थेन शब्देन रिक्तं स्थानं पूरयत–**

[ **कोष्ठक में प्रदत्त शब्दों से रिक्तस्थान भरें।** Fill in the blanks with the words given in the bracket.]

(क) श्लोके 'दशरथात्मजः' इत्यनेन उच्यते (रामः/लक्ष्मणः)

(ख) रामः सम्यक् पूजितः (शबर्या/शूर्पणखया)

(ग) हनुमान् रामं मिलितवान् (पम्पातीरे/गङ्गातीरे)

(घ) शबरी सम्यक् पूजितवती (रामम्/विभीषणम्)

(ङ) महातेजाः रामः अभ्यगच्छत् (शबरीम्/जानकीम्)

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) पूजित (ख) सम्यक् (ग) आत्मज (घ) तेजस्

**श्लोकः**

।

पम्पातीरे हनुमता सङ्गतो वानेरण ह॥ 58 ॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
॥ 59 ॥

**पदच्छेदः**

............................................................ ।
पम्पा-तीरे हनुमता सङ्गतः वानरेण ह ॥ 58 ॥
हनुमद्-वचनात् च एव सुग्रीवेण समागतः ।
.................................. ॥ 59 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| पम्पा-तीरे | अ० नपुं० स० एक० समस्तम् | हनुमद्-वचनात् | अ० नपुं० प० एक० समस्तम् |
| हनुमता | हनुमत्- त्० पुं० तृ० एक० | च | अव्ययम् |
| सङ्गतः | अ० पुं० प्र० एक० | एव | अव्ययम् |
| वानरेण | अ० पुं० तृ० एक० | सुग्रीवेण | अ० पुं० तृ० एक० |
| ह | अव्ययम् | समागतः | अ० पुं० प्र० एक० |

**आकाङ्क्षा**

**(रामः) सङ्गतः।**

केन सङ्गतः ? — हनुमता सङ्गतः ।
कीदृशेन हनुमता ? — वानरेण हनुमता ।
कुत्र सङ्गतः ? — पम्पातीरे सङ्गतः ।

**(रामः) समागतः।**

केन समागतः ? — सुग्रीवेण समागतः ।
कस्मात् समागतः ? — हनुमद्-वचनात् समागतः ।

**अन्वयः**

पम्पातीरे वानरेण हनुमता सङ्गतः। हनुमद्वचनात् च एव सुग्रीवेण समागतः ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| पम्पातीरे | पम्पा-नाम्नः सरोवरस्य तटे | पम्पा नामक सरोवर के किनारे | on the bank of pampā lake |
| वानरेण | कपिना | बन्दर | monkey |
| हनुमता | आञ्जनेयेन | हनुमान् के साथ | with Hanumān |
| सङ्गतः | सम्मिलितः | मिला | came in contact |
| हनुमद्वचनात् च एव | आञ्जनेय-वचनेन एव | और हनुमान के कहने से ही | and at the inter cession of Hanumān |
| सुग्रीवेण | सुग्रीवनाम्ना वानरेण | सुग्रीव से | alone with Sugrīva |
| समागतः | मिलितः | मिला | made friendship |

**भावार्थः**

**संस्कृतम्**– रामः पम्पानामके सरोवरतटे हनुमंता सह मिलितवान् । हनुमतः कथनाद् एव सुग्रीवनाम्ना वानरराजेन अपि सङ्गतः ।

**हिन्दी**– पम्पा सरोवर के तट पर राम वानरश्रेष्ठ हनुमान् से मिले। हनुमान् के कहने पर ही सुग्रीव से मिले।

**आंग्लम्**– Śrī Rāma, came into contact with the monkey chief, Hanumān, on the bank of the Pampā lake: so the tradition goes. At the intercession of Hanumān alone he further made friends with Sugrīva.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

सङ्गतो वानरेण – सङ्गतः + वानरेण (विसर्ग-सन्धिः)

हनुमद्वचनात् – हनुमत् + वचनात् (जश्त्वम्)

वचनाच्च – वचनात् + च (श्चुत्वम्)

चैव – च + एव (वृद्धि-सन्धिः)

**(ख) समासः**

| | | |
|---|---|---|
| पम्पातीरे | – | पम्पायाः तीरं पम्पातीरम् (षष्ठी-तत्पु०) तस्मिन् |
| हनुमद्वचनात् | – | हनुमतः वचनम् हनुमद्वचनम् (षष्ठी-तत्पु०) तस्मात् |

**(ग) कृदन्ताः**

| | | |
|---|---|---|
| सङ्गतः | – | सम् + गम् + क्त |
| वचनम् | – | वच् + ल्युट् (यु → अन) |
| समागतः | – | सम् + आ + गम् + क्त |

**(घ) तद्धितान्तः**

| | | |
|---|---|---|
| हनुमता | – | हनू अस्य स्तः इति हनुमान् (हनु + मतुप्) = हनुमत् |

(ii) **पर्यायवाचिनः शब्दाः**

| | | |
|---|---|---|
| वानरः | – | कपिः, हरिः, मर्कटः, शाखामृगः |
| तीरम् | – | पुलिनम्, कूलम्, तटम् |

---

## अभ्यासः – 37

**(श्लोकः 58½-59½)**

1. **पदपरिचयं लिखत–**

[ **पदों का परिचय दें।** Identify the words.]

**यथा–** (क) ह = अव्ययम्

(ख) पम्पातीरे =

(ग) हनुमता =

(घ) एव =

(ङ) समागतः =

(च) हनुमद्वचनात् =

2. **श्लोकस्य भावार्थं पूरयत–**

[ **भावार्थ की पूर्ति करें।** Complete the meaning of the verse.]

पम्पातीरे वानरेण रामः वचनात् च समागतः ।

3. **यथोचितं योजयत–**
[ **उचित मेल बनाएं।** Match with the appropriate one.]

| | | | |
|---|---|---|---|
| (i) | हनुमद्वचनात् | (क) | सहार्थे तृतीया |
| (ii) | सुग्रीवेण | (ख) | हेतौ पञ्चमी |
| (iii) | ह | (ग) | समुच्चयार्थकम् अव्ययम् |
| (iv) | च | (घ) | प्रसिद्धार्थकम् अव्ययम् |
| (v) | चैव | (ङ) | वृद्धि-सन्धिः |

4. **प्रकृति-प्रत्यय-विभाजनपूर्वकं पञ्च क्त-प्रत्ययान्तानि उदाहरणानि लिखत–**
[ **प्रकृति-प्रत्यय विभाग दर्शाते हुए पाँच क्त-प्रत्ययान्त उदाहरण लिखें।** Give five examples of the words ending in *kta* by splitting them in to base and suffix.]

**यथा– सङ्गतः = सम् - गम् + क्त** (i) .................. .................. (ii)
(iii) .................. (iv) .................. (v) ..................

5. **समानार्थक-शब्दान् लिखत–**
[ **समानार्थक शब्द लिखें।** Write the synonym's of the following words.]

**यथा–** (क) वचनात् = **उक्तेः**
(ख) वानरेण =
(ग) तीरे =
(घ) समागतः =
(ङ) सङ्गतः =
(च) एव =

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**
[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) तीर (ख) सङ्गत (ग) वचन

**श्लोकः**

।

सुग्रीवाय च तत्सर्वं शंसद् रामो महाबलः ॥ 59 ॥

आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ।

॥ 60 ॥

**पदच्छेदः**

.............................................................................. ।

सुग्रीवाय च तत्सर्वं शंसत् रामः महा-बलः ॥ 59 ॥

आदितः तद् यथा-वृत्तं सीतायाः च विशेषतः ।

॥ 60 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सुग्रीवाय | अ० पुं० च० एक० | रामः | अ० पुं० प्र० एक० |
| च | अव्ययम् | महाबलः | अ० पुं० प्र० एक० समस्तम् |
| तत् | तद्- द्० सर्व० नपुं० द्विती० एक० | आदितः | अव्ययम् |
| सर्वम् | अ० सर्व० नपुं० द्विती० एक० | यथावृत्तम् | अव्ययम्, समस्तम् |
| | | सीतायाः | आ० स्त्री० ष० एक० |
| शंसत् | शंस्- कर्तरि लङ् प्रपु० एक० | च | अव्ययम् |
| | | विशेषतः | अव्ययम् |

**आकाङ्क्षा**

**(अ)शंसत्।**

| | |
|---|---|
| कः (अ) शंसत् ? | रामः। |
| कीदृशः रामः ? | महाबलः रामः। |
| किम् अशंसत् ? | आदितः तत्सर्वम् (वृत्तम्) अशंसत्। |
| पुनः किम् अशंसत् ? | विशेषतः सीतायाः यथावृत्तम् अशंसत्। |
| कस्मै अशंसत् ? | सुग्रीवाय अशंसत्। |

**अन्वयः**

महाबलः रामः सुग्रीवाय आदितः तत् सर्वम् अशंसत्। विशेषतः सीतायाः यथावृत्तम् अशंसत्।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| महाबलः | अतुलितबलः | महाशक्तिशाली | exceedingly powerful (Rāma) |
| आदितः | आरम्भतः | आरम्भ से | from the very beginning |
| सर्वम् | पूर्णम् | सभी | the whole |
| वृत्तम् | वृत्तान्तम् | घटनाओं को | (popular) story |
| सुग्रीवाय | सुग्रीवनामधेयाय | सुग्रीव को | to Sugrīva |
| शंसत् | अकथयत् | सुनाया | narrated |
| विशेषतः | विशेषेण | विशेष रूप से | in particular |
| सीतायाः | जानक्याः | सीता का | of Sītā |
| तद् | तद् हरणरूपम् | वह (हरण) | that |
| यथावृत्तम् | यथाघटितम् | जैसा हुआ | well known story |
| (शंसत्) | (अगादीत्) | (कहा) | (narrated) |

**भावार्थः**

**संस्कृतम्**— महाशक्तिसम्पन्नः श्रीरामः आरम्भतः सम्पूर्णं वृत्तं सुग्रीवाय श्रावितवान् तत्रापि विशेषतः सीतायाः अपहरणवृत्तं यथा-घटितम् अगादीत् ।

**हिन्दी**— महाबलशाली श्रीराम ने प्रारम्भ से सभी वृत्तान्त सुग्रीव को सुनाया तथा विशेष रूप से सीता के अपहरण की घटना को बताया ।

**आंग्लम्**— To Sugrīva the exceedingly powerful Rāma duly narrated from the very beginning (his very birth) the whole of his popular story and the well-known story of Sītā (his consort) in particular.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

शंसद्रामः = शंसत् + रामः (जश्त्व-सन्धिः)

शंसद्रामो महाबलः = शंसद्रामः + महाबलः (विसर्ग-सन्धिः)
आदितस्तद् = आदितः + तद् (विसर्ग-सन्धिः)
सीतायाश्च = सीतायाः + च (विसर्ग-सन्धिः)

**(ख) समासः**

महाबलः – महद् बलं यस्य (बहुव्रीहिः)
यथावृत्तम् – वृत्तमनतिक्रम्य यथावृत्तम् (अव्ययीभावः)

**(ग) तद्धितान्ताः**

आदितः – आदि + तसिल्
विशेषतः – विशेष + तसिल्
यथा – यत् + थाल्

**(घ) कृदन्तः**

वृत्तम् – वृत् + क्त

**(ङ) तिङन्तम्**

शंसत् – अशंसत् इत्यस्य स्थाने शंसत् इति आर्षः प्रयोगः। (सर्वत्र लङ् लकारे अडागमः भवति अत्र न जातः)

(ii) **पर्यायवाचिनः शब्दाः**

वृत्तम् – वार्ता, वृत्तान्तः, उदन्तः

---

## अभ्यासः – 38

**(श्लोकः 59½-60½)**

1. **विग्रहवाक्यं लिखत–**

[ **विग्रहवाक्य लिखें।** Write the analytical sentece.]

**यथा–** (क) महाबलः = ....**महद्**.... ....**बलं**.... ....**यस्य**.... (....**बहुव्रीहिः**....)

(ख) महामनाः = (..........)

(ग) महातेजाः = (.............)

(घ) महाधनः = (.............)

(ङ) महाबाहुः = (.............)

(च) महाबन्धुः = (.............)

(छ) महायशाः = (.............)

(ज) महाशक्तिः = (.............)

**2. अस्य श्लोकस्य प्रमुखं क्रियापदं कर्तृपदं कर्मपदं च निर्दिशत–**

[**इस श्लोक के प्रमुख क्रियापद, कर्तृपद एवं कर्मपद का निर्देश करें।** Point out the main verb, subject and object of this verse.]

**3. श्चुत्व-सन्धेः पञ्च उदाहरणानि लिखत–**

[**श्चुत्व-सन्धि के पाँच उदाहरण लिखें।** Write five examples of *ścutva-sandhi.*]

**यथा–** (क) वचनाच्च = ......**वचनात्**...... + ......**च**......

(ख) = +

(ग) = +

(घ) = +

(ङ) = +

**4. यथोदाहरणं क्रियारूपं (लङ्-रूपं) लिखत–**

[**उदाहरण के अनुसार क्रिया रूप लिखें।** Write the verbal form as shown in the example.]

**यथा–** (क) ......**अशंसत्**...... ( शंस् ) (ङ) ( श्रु )

(ख) ......अकथयत्...... ( कथ् ) (च) ( चल् )

(ग) ( वद् ) (छ) ( गम् )

(घ) ( पूज् ) (ज) ......अपिबत्...... ( पा-पाने )

**श्लोकः**

।

**सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः ॥ 60 ॥**

**चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ।**

**॥ 61 ॥**

**पदच्छेदः**

........................................ ।

सुग्रीवः अपि तत् सर्वं श्रुत्वा रामस्य वानरः ॥ 60 ॥

चकार सख्यं रामेण प्रीतः च एव अग्नि-साक्षिकम् ।

॥ 61 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सुग्रीवः | अ० पुं० प्र० एक० | चकार | कृ- कर्तरि लिट् प्रपु० एक० |
| अपि | अव्ययम् | | |
| तत् | तद्- द्० सर्व० नपुं० द्विती० एक० | सख्यम् | अ० नपुं० द्विती० एक० |
| | | रामेण | अ० पुं० तृ० एक० |
| सर्वम् | अ० सर्व० नपुं० द्विती० एक० | प्रीतः | अ० पुं० प्र० एक० |
| | | च | अव्ययम् |
| श्रुत्वा | क्त्वान्तम् अव्ययम् | एव | अव्ययम् |
| रामस्य | अ० पुं० ष० एक० | अग्नि-साक्षिकम् | अ० नपुं० द्विती० एक० समस्तम् |
| वानरः | अ० पुं० प्र० एक० | | |

**आकाङ्क्षा**

**चकार।**

| | |
|---|---|
| कः चकार ? | सुग्रीवः चकार । |
| कीदृशः सुग्रीवः ? | वानरः सुग्रीवः । |
| पुनश्च कीदृशः सुग्रीवः ? | प्रीतः सुग्रीवः । |
| सुग्रीवः किं चकार ? | सुग्रीवः सख्यं चकार । |
| सुग्रीवः केन सख्यं चकार ? | सुग्रीवः रामेण सख्यं चकार । |
| सुग्रीवः कीदृशं सख्यं चकार ? | सुग्रीवः अग्निसाक्षिकं सख्यं चकार । |
| सुग्रीवः किं कृत्वा सख्यं चकार ? | सुग्रीवः रामस्य तत्सर्वं श्रुत्वा सख्यं चकार । |

**अन्वयः**

वानरः सुग्रीवः च रामस्य तत्सर्वं श्रुत्वा प्रीतः च रामेण अग्निसाक्षिकं सख्यं चकार।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| वानरः | कपिः | वानर | monkey |
| सुग्रीवः | सुग्रीवनामा | सुग्रीव | Sugrīva by name |
| च | अपि | भी | too |
| रामस्य | राघवस्य | राम का | of Rāma |
| तत्सर्वम् | पूर्णम् | सारा वृत्तान्त | the whole (narrative) |
| श्रुत्वा | आकर्ण्य | सुनकर | having heared |
| प्रीतः (सन्) | प्रसन्नः (सन्) | प्रसन्न (होते हुए) | pleased |
| च | च | और | and |
| रामेण | राघवेण | राम से | with Rāma |
| अग्निसाक्षिकम् | अग्निं साक्षीकृत्य | अग्नि को साक्षी मानकर | in the presence of (sacred) fire as witness |
| सख्यम् | मैत्रीम् | मित्रता | friendship |
| चकार | कृतवान् | किया | made |

**भावार्थः**

**संस्कृतम्**— राघवस्य सर्वम् इतिवृत्तम् आकर्ण्य (समान-दुःख-पीडितौ एव आवाम् इति विचिन्त्य तेन सह मैत्रीं हितकरीं ज्ञात्वा) प्रमुदितः सन् अग्निं साक्षिणं विधाय रामेण सह मैत्रीम् अकरोत्।

**हिन्दी**— राम की पूरी पूर्व-कथा को सुनकर (हम दोनों समान दुःख से पीड़ित हैं। अतः इनसे मैत्री करना हितकर होगा ऐसा सोच कर) प्रसन्न होते हुए सुग्रीव ने अग्नि को साक्षी करके राम के साथ मैत्री की।

**आंग्लम्**— Pleased to hear the whole narrative of Śrī Rāma, the monkey chief Sugrīva too made friendship with Śrī Rāma in presence of (the sacred) fire as a witness.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

| | | |
|---|---|---|
| सुग्रीवश्च | – | सुग्रीवः + च (विसर्ग-सन्धिः) |
| चापि | – | च + अपि (दीर्घ-सन्धिः) |
| प्रीतश्च | – | प्रीतः + च (विसर्ग-सन्धिः) |
| चैव | – | च + एव (वृद्धि-सन्धिः) |
| चैवाग्निसाक्षिकम् | – | चैव + अग्निसाक्षिकम् (दीर्घ-सन्धिः) |

**(ख) समासः**

| | | |
|---|---|---|
| अग्निसाक्षिकम् | – | अग्निः साक्षी यस्य (बहुव्रीहिः) |

**(ग) कृदन्तौ**

| | | |
|---|---|---|
| श्रुत्वा | – | श्रु + क्त्वा |
| प्रीतः | – | प्री + क्त |

**(घ) तद्धितान्तः**

| | | |
|---|---|---|
| सख्यम् | – | सखि + यत् |

---

### अभ्यासः – 39
### (श्लोकः 60½-61½)

1. **यथोचितं रिक्तं स्थानं पूरयत–**
[ **यथोचित रिक्त स्थान भरें।** Fill in the blanks.]

| | | |
|---|---|---|
| चकार | | जहार |
| | चक्र | |
| चकार | | |

2. **श्लोकस्थं विशेषणपदम् उचितेन विशेष्य-पदेन योजयत–**
[ **श्लोक के विशेषणपद को उचित विशेष्य पद से जोड़ें।** Join the qualifiers of the verse with appropriate qualificands.]

| विशेषणपदम् | विशेष्यपदम् |
|---|---|

3. **उत्तरं लिखत—**

[ **उत्तर लिखें।** Answer the following questions.]

(क) रामसुग्रीवयोः मित्रतायाः साक्षी कः आसीत् ? ।

(ख) सुग्रीवः केन सह सख्यं चकार ? ।

(ग) सुग्रीवः किं श्रुत्वा सख्यं चकार ? ............ ।

(घ) 'चकार' इत्यस्य कर्ता कः ? ............ ।

4. **अधोलिखितं योजयत—**

[ **अधोलिखित को जोड़ें।** Match the following.]

| | | | |
|---|---|---|---|
| (i) | अग्निसाक्षिकम् | (क) | तिङन्तम् |
| (ii) | वानरः | (ख) | कृदन्तः |
| (iii) | श्रुत्वा | (ग) | तद्धितान्तः |
| (iv) | चकार | (घ) | असमस्तं सुबन्तम् |
| (v) | सख्यम् | (ङ) | समस्तपदम् |

5. **यथोदाहरणं पूरयत—**

[ **उदाहरण के अनुसार पूर्ण करें।** Complete as shown in the example.]

| | | लिटि | | लङि | | क्तवतु-प्रत्ययान्ते | | धातुः |
|---|---|---|---|---|---|---|---|---|
| **यथा—** | (क) | चकार | = | **अकरोत्** | = | **कृतवान्** | – | **कृ** |
| | (ख) | जगाम | = | | = | | – | |
| | (ग) | जघान | = | | = | | – | |
| | (घ) | लिलेख | = | | = | | – | |
| | (ङ) | ममार | = | | = | | – | |

**श्लोकः**

।

**ततो वानरराजेन वैरानुकथनं प्रति ॥ 61 ॥**

**रामायावेदितं सर्वं प्रणयाद् दुःखितेन च ।**

**प्रतिज्ञातं च रामेण तदा वालिवधं प्रति ॥ 62 ॥**

**पदच्छेदः**

।

ततः वानर-राजेन वैरानुकथनम् प्रति ॥ 61 ॥

रामाय आवेदितम् सर्वम् प्रणयात् दुःखितेन च ।

प्रति-ज्ञातम् च रामेण तदा वालि-वधं प्रति ॥ 62 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | तद्धितान्तम् अव्ययम् | दुःखितेन | अ० पुं० तृ० एक० |
| वानर-राजेन | अ० पुं० तृ० एक० | च | अव्ययम् |
| | समस्तम् | प्रतिज्ञातम् | अ० नपुं० प्र० एक० |
| वैरानुकथनम् | अ० नपुं० द्वितीο एक० | च | अव्ययम् |
| | समस्तम् | रामेण | अ० पुं० तृ० एक० |
| प्रति | अव्ययम् | तदा | तद्धितान्तम् अव्ययम् |
| रामाय | अ० पुं० च० एक० | वालि-वधम् | अ० पुं० द्वितीο एक० |
| आवेदितम् | अ० नपुं० प्र० एक० | | समस्तम् |
| सर्वम् | अ० नपुं० द्वितीο एक० | प्रति | अव्ययम् |
| प्रणयात् | अ० पुं० पञ्च० एक० | | |

**आकाङ्क्षा**

**ततः आवेदितम् ।**

| | |
|---|---|
| केन आवेदितम् ? | वानरराजेन आवेदितम् । |
| कीदृशेन वानरराजेन आवेदतिम् ? | दुःखितेन वानरराजेन आवेदितम् । |
| कस्मै आवेदितम् ? | रामाय आवेदितम् । |
| किम् आवेदितम् ? | वैरानुकथनं प्रति सर्वम् आवेदितम् । |

कस्मात् आवेदितम् ? प्रणयात् आवेदितम् ।

**तदा प्रतिज्ञातम् ।**

केन प्रतिज्ञातम् ? रामेण प्रतिज्ञातम् ।

किं प्रतिज्ञातम् ? वालिवधं प्रति प्रतिज्ञातम् ।

**अन्वयः**

ततः दुःखितेन वानरराजेन वैरानुकथनं प्रति रामाय सर्वं प्रणयात् आवेदितम् । तदा च रामेण वालिवधं प्रति प्रतिज्ञातम् ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तदनन्तरम् | तब | then |
| दुःखितेन | पीडितेन | दुःखित | afflicted |
| वानरराजेन | कपीश्वरेण | वानरराज (सुग्रीव) के द्वारा | by chief of monkey (Sugrīva) |
| वैरानुकथनं प्रति | शत्रुता-हेतुक-प्रश्नविषये | वैर सम्बन्धी प्रश्न के उत्तर में | with regard to his enemity |
| रामाय | राघवाय | राम (से) | to Śrī Rāma |
| सर्वम् | निखिलम् (वृत्तम्) | सब कुछ | the whole |
| प्रणयात् | प्रेम्णः | प्रेम के कारण | out of affection |
| आवेदितम् | निवेदितम् | निवेदन किया गया | reported |
| तदा च | तस्मिन् समये च | और तब | again at that moment |
| रामेण | राघवेण | राम के द्वारा | by Śrī Rāma |
| वालिवधं प्रति | वालि-संहरणं प्रति | वालि वध के प्रति | to the effect that Vālī would be killed |
| प्रतिज्ञातम् | निश्चितम् | प्रतिज्ञा की गयी | a vow was taken |

**भावार्थः**

**संस्कृतम्**— रामेण सुग्रीवः वालिना सह वैरविषये पृष्टः। स्नेहवशात् सः रामाय सर्वं वैरवृत्तान्तं न्यवेदयत्। अन्याययुतं वालिनः आचरणं ज्ञात्वा रामः तस्य वधं प्रति प्रतिज्ञां कृतवान्।

**हिन्दी**— राम ने सुग्रीव से वालि के साथ शत्रुता का कारण पूछा। राम के साथ अपनी प्रीति के कारण सुग्रीव नें वाली के साथ शत्रुता का सम्पूर्ण वृत्तान्त सुना दिया। वाली के इस अन्याय-पूर्वक आचरण को सुनकर राम ने सुग्रीव के समक्ष वाली के वध की प्रतिज्ञा की।

**आंग्लम्**— In response to an inquiry (made by Śrī Rāma) with regard to his enmity (with his own elder brother, Vālī), the whole incident was then related by Sugrīva, afflicted as he was, to Śrī Rāma out of affection. Again, a vow was taken by Śri Rāma that (very) moment to the effect that Vālī would be killed by him.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

वैरानुकथनम् – वैर + अनुकथनम् (दीर्घः)
रामायावेदितम् – रामाय + आवेदितम् (दीर्घः)
प्रणयाद्-दुःखितेन – प्रणयात् + दुःखितेन (जश्त्वम्)

(ख) **समासः**

वानरराजेन – वानराणां राजा वानरराजः तेन (ष० तत्पु०)
वैरानुकथनम् – वैरस्य अनुकथनम् (ष० तत्पु०) तत्
वालिवधम् – वालिनः वधः वालिवधः (ष० तत्पु०) तम्

(ग) **कृदन्ताः**

कथनम् – कथ + ल्युट् (यु → अन)
आवेदितम् – आ + विद् + क्त
प्रतिज्ञातम् – प्रति + ज्ञा + क्त (भावे क्तः)

(घ) **तद्धितान्तौ**

दुःखितः – दुःख + इतच्
तदा – तद् + दा

**अवधेयम्**

**समासान्तप्रत्ययविषये**

## अभ्यासः – 40

### (श्लोकः 61½-62)

1. **विग्रह-वाक्यं लिखत–**
[**विग्रहवाक्य लिखें।** Write the analytical sentence.]

**यथा– (क)** **वानरराजः** वानराणां राजा ......वानरराजः......

**(ख)** **पक्षिराजः**

**(ग)** **गजराजः**

**(घ)** **देवराजः**

**(ङ)** **मृगराजः**

2. **सत्यम् ✔ असत्यं × वा निर्दिशत–**
[**सही ✔ या गलत × बताएं।** Say true ✔ or false ×.]

(क) सुग्रीवः वानरराजः आसीत् । ☐

(ख) सुग्रीवेण सर्वं वालिने आवेदितम् । ☐

(ग) रामः वालिनः वधं प्रतिज्ञातवान् । ☐

(घ) प्रीतः वानरराजः सर्वम् आवेदितवान् । ☐

(ङ) 'तदा' इति एकः कृदन्तः शब्दः । ☐

3. **कर्तरि / कर्मणि वा परिवर्तयत–**
[**वाच्य परिवर्तन करें।** Change the voice.]

**यथा–** (क) दुःखितेन सुग्रीवेण रामाय सर्वम् आवेदितम् ? (कर्मणि)

**दुःखितः सुग्रीवः रामाय सर्वम् आवेदितवान् ।** (**कर्तरि**)

(ख) रामेण वालिवधः प्रतिज्ञातः ।

।

(ग) बालकेन चन्द्रः दृष्टः ।

।

(घ) रावणः विभीषणं लङ्कातः निष्कासितवान् ।

।

(ङ) हनुमान् अक्षकुमारं हतवान् ।

।

(च) शबर्या रामः पूजितः ।

।

4. **क्तप्रत्ययान्तं क्तवतु-प्रत्ययान्ते परिवर्तयत–**

[ **क्तप्रत्ययान्त को क्तवतुप्रत्ययान्त में बदलें।** Change the voice.]

**यथा–** (क) गतः – **गतवान्**

(ख) प्रतिज्ञातम् –

(ग) श्रुतम् –

(घ) सेवितम् –

(ङ) प्राप्तम् –

(च) भुक्तम् –

5. **श्लोकस्थानि अव्ययपदानि संकलयत–**

[ **श्लोकस्थ अव्ययपदों को एकत्र करें।** Collect together the indeclinable words of the verse.]

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) ततः (ख) प्रति (ग) प्रणय (घ) तदा (ङ) दुःखित

**श्लोकः**

वालिनश्च बलं तत्र कथयामास वानरः ।
सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ 63 ॥

**पदच्छेदः**

वालिनः च बलम् तत्र कथयामास वानरः ।
सुग्रीवः शङ्कितः च आसीत् नित्यं वीर्येण राघवे ॥ 63 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| वालिनः | वालिन्- न्० पुं० ष० एक० | सुग्रीवः | अ० पुं० प्र० एक० |
| | | शङ्कितः | अ० पुं० प्र० एक० |
| बलम् | अ० पुं० द्वितीο एक० | च | अव्ययम् |
| तत्र | अव्ययम् | आसीत् | अस्- कर्तरि लङ् प्रपु० एक० |
| कथयामास | कथ- कर्तरि लिट् प्रपु० एक० | | |
| | | नित्यम् | अ० नपुं० द्विती० एक० |
| वानरः | अ० पुं० प्र० एक० | वीर्येण | अ० नपुं० तृ० एक० |
| | | राघवे | अ० पुं० स० एक० |

**आकाङ्क्षा**

**कथयामास।**

| | |
|---|---|
| कः कथयामास ? | वानरः (सुग्रीवः) कथयामास । |
| वानरः किं कथयामास ? | वानरः बलं कथयामास । |
| वानरः कस्य बलं कथयामास ? | वानरः वालिनः बलं कथयामास । |
| वानरः वालिनः बलं कुत्र कथयामास ? | वानरः वालिनः बलं तत्र कथयामास । |

**शङ्कितः आसीत्।**

| | |
|---|---|
| कः शङ्कितः आसीत् ? | सुग्रीवः शङ्कितः आसीत् । |
| सुग्रीवः कस्मिन् शङ्कितः आसीत् ? | सुग्रीवः राघवे शङ्कितः आसीत् । |
| सुग्रीवः केन राघवे शङ्कितः आसीत् ? | सुग्रीवः वीर्येण राघवे शङ्कितः आसीत् । |
| सुग्रीवः कदा शङ्कितः आसीत् ? | सुग्रीवः नित्यं शङ्कितः आसीत् । |

**अन्वयः**

वानरः सुग्रीवः राघवे वीर्येण नित्यं शङ्कितः च आसीत् (सः) तत्र वालिनः बलं च कथयामास।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| वानरः | कपिः | वानर | the monkey |
| सुग्रीवः | सुग्रीव-नामकः | सुग्रीव | Sugrīva |
| राघवे | रामे | राम (के) | concerning Rāma |
| वीर्येण | बलेन | बल (के विषय में) | in the matter of prowess |
| नित्यम् | सततम् | हमेशा | ever |
| शङ्कितः | सन्देहयुतः | सन्देह युक्त | full of misgivings |
| च | च | और | and |
| आसीत् | अवर्तत | था | was |
| तत्र | तस्मिन् स्थले | वहाँ | there |
| वालिनः | वालिनामकस्य वानरराजस्य | वाली की | of Vālī |
| बलम् | शक्तिम् | शक्ति को | strength |
| कथयामास | अवदत् | कहा | described |

**भावार्थः**

**संस्कृतम्**– सुग्रीवः वालिनः बलं सम्यक् जानाति स्म। वाली अतुलितबलेन युक्तः जगतः महतः बलशालिनः पराजयं प्रापयितुं समर्थः आसीत्। रामः यदा सुग्रीवेण सह अमिलत् तदा सुग्रीवस्य महान् सन्तोषः अभवत्। परं सः निरन्तरं शङ्कायुक्तः तिष्ठति स्म यत् रामस्य शक्तिः वालिनः समक्षं स्थास्यति न वा। स्वलक्ष्यस्य प्राप्तिं भृशं समीहमानः सन् एव सुग्रीवः पराजयभयात् रामे बलेन शङ्कितः आसीत्। अतः सः रामं वालिनः बलम् अवदत्।

**हिन्दी**– सुग्रीव वालि के बल से सुपरिचित था। वालि में इतना बल था जिसके समक्ष संसार के बड़े से बड़े बलवान् भी धराशायी हो जाएँ। जब राम सुग्रीव से मिले तो सुग्रीव बहुत सन्तुष्ट हुआ। परन्तु निरन्तर उसके मन में राम के बल को लेकर शङ्का रहने लगी। उसे शङ्का थी कि

राम की शक्ति वालि के समक्ष टिक पायेगा या नहीं। अपने लक्ष्य को प्राप्त करने की दृढ़ इच्छा से युक्त सुग्रीव ने राम के बल को जानने हेतु उसके समक्ष वालि की शक्ति का वर्णन किया।

**आंग्लम्**– And, there (on Mount Ṛṣyamūka) the monkey chief described (to Śrī Rāma) the (unique) strength of Vālī (his elder brother), since Sugrīva was ever full of misgivings concerning Śrī Rāma (a scion of Raghu) in the matter of prowess (vis-a-vis his opponent, Vālī).

**निदर्शनम्**

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| वालिनश्च | – | वालिनः + च (विसर्ग-सन्धिः) |
| शङ्कितश्च | – | शङ्कितः + च (विसर्ग-सन्धिः) |
| चासीत् | – | च + आसीत् (दीर्घ-सन्धिः) |

(ख) **कृदन्तः**

| | | |
|---|---|---|
| शङ्कितः | – | शङ्क् + क्त (कृदन्तः) |

(ii) **पर्यायवाचिनः शब्दाः**

| | | |
|---|---|---|
| बलम् | – | वीर्यम्, शक्तिः, सामर्थ्यम्, पराक्रमः |
| राघवः | – | रघुनाथः, रघुपतिः, रामः, दाशरथिः |

## अभ्यासः – 41
### (श्लोकः 63)

1. **अन्वयं पूरयत–**

[**अन्वय पूरा करें।** Complete the construction.]

वानरः ______ नित्यं ______ वीर्येण ______
च आसीत्। (सः) ______ बलं ______ ।

2. **मञ्जूषायां प्रदत्तैः शब्दैः श्लोकस्य भावार्थं प्रकाशयत–**

[**मञ्जूषा में प्रदत्त शब्दों से श्लोक के भावार्थ को स्पष्ट करें।** Give the meaning of the verse with the words given in the box.]

| | | | | |
|---|---|---|---|---|
| | रामस्य | बलं | आसीत् | |
| सुग्रीवः | वालिनः | शक्तौ शङ्कितः | कथयामास | |
| | रामस्य | शक्तिपरीक्षणम् | इष्टवान् | |

3. **सत्यम् ✔ असत्यं × यथोचितं चिह्नीकुरुत–**

[ **सत्य ✔ या असत्य × बताएं।** Say true ✔ or false × .]

(क) वाली महाबली आसीत्। ☐

(ख) रामः दुर्बलः आसीत्। ☐

(ग) सुग्रीवः कापुरुषः आसीत्। ☐

(घ) रामः शङ्कितः आसीत्। ☐

(ङ) वाली रामस्य बलं परीक्षितुम् इष्टवान्। ☐

4. **यथोचितं योजयत–**

[ **यथोचित जोड़े।** Match appropriately.]

| | | | |
|---|---|---|---|
| (i) | कथयामास | (क) | दृश् + णिच् लिट् |
| (ii) | प्रापयामास | (ख) | कथ् + णिच् लिट् |
| (iii) | दर्शयामास | (ग) | प्र + आप् + णिच् लिट् |
| (iv) | तोषयामास | (घ) | प्रेष् + णिच् लिट् |
| (v) | प्रेषयामास | (ङ) | तुष् + णिच् लिट् |

5. **उत्तरं लिखत–**

[ **उत्तर लिखें।** Write the answer.]

(क) श्लोके वानरशब्दः कस्य कृते प्रयुक्तः ? ।

(ख) सुग्रीवः कुत्र शङ्कितः आसीत् ? ।

(ग) 'कथयामास' इति क्रिया पदस्य कर्ता कः। .................................................. ।

(घ) 'कथयामास' इति क्रियापदस्य मुख्यं कर्म किम्। ।

**श्लोकः**

**राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ।**
**दर्शयामास सुग्रीवो महापर्वतसंनिभम् ॥ 64 ॥**

**पदच्छेदः**

राघव-प्रत्ययार्थम् तु दुन्दुभेः कायम् उत्तमम् ।
दर्शयामास सुग्रीवः महा-पर्वत-संनिभम् ॥ 64 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| राघवप्रत्ययार्थम् | अ० नपुं० द्वितीο एक० समस्तम् | दर्शयामास | दृश्- कर्तरि लिट् प्रपु एक० |
| तु | अव्ययम् | सुग्रीवः | अ० पुं० प्र० एक० |
| दुन्दुभेः | इ० पुं० ष० एक० | महापर्वतसंनिभम् | अ० पुं० द्वितीο एक० समस्तम् |
| कायम् | अ० पुं० द्वितीο एक० | | |
| उत्तमम् | अ० पुं० द्वितीο एक० | | |

**आकाङ्क्षा**

**दर्शयामास।**

| | |
|---|---|
| कः दर्शयामास ? | सुग्रीवः दर्शयामास । |
| सुग्रीवः किं दर्शयामास ? | सुग्रीवः कायं दर्शयामास । |
| सुग्रीवः कस्य कायं दर्शयामास ? | सुग्रीवः दुन्दुभेः कायं दर्शयामास । |
| सुग्रीवः कीदृशं कायं दर्शयामास ? | सुग्रीवः उत्तमं कायं दर्शयामास । |
| पुनः कीदृशं कायं दर्शयामास ? | महापर्वतसन्निभं कायं दर्शयामास । |
| किमर्थं दुन्दुभेः कायं दर्शयामास ? | राघवप्रत्ययार्थम् । |

**अन्वयः**

सुग्रीवः राघवप्रत्ययार्थं तु महापर्वतसन्निभं दुन्दुभेः उत्तमं कायं दर्शयामास ।

**पदार्थ**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सुग्रीवः | सुग्रीवनामकः वानरराजः | सुग्रीव | Sugrīva |
| राघवप्रत्ययार्थम् | रामस्य विश्वासाय | राम के विश्वास के लिए | in order to convince Śhrī Rāma |
| महापर्वतसन्निभम् | महागिरिसदृशम् | विशाल पर्वत के सदृश | looking like a big mountain |
| दुन्दुभेः | दुन्दुभि-नामकराक्षसस्य | दुन्दभि नामक राक्षस के | of dundubhi |
| उत्तमम् | विशालम् | बड़े | tall |
| कायम् | शरीरम् | शरीर को | skeleton |
| दर्शयामास | अदर्शयत् | दिखलाया | actually showed |

**भावार्थः**

**संस्कृतम्**— वाली महाबली आसीत्। सुग्रीवः सततं रामस्य बलं शङ्कया पश्यति स्म। सः रामं वालिनः बलस्य महिमानं ज्ञापयितुं दुन्दुभिनामकस्य राक्षसस्य विशालकायम् अदर्शयत्। दुन्दुभेः शरीरं महापर्वतसदृशं दृश्यते स्म। एतादृशं बलवन्तं दुन्दुभिम् अपि वाली भूमिसात् कृत्वा दूरं क्षिप्तवान्।

**हिन्दी**— बाली महाबली था। सुग्रीव प्रतिदिन राम के बल के प्रति शङ्कित रहता था। उसने दुन्दुभि नामक राक्षस का शरीर राम को दिखाया, जिससे राम को बाली के महाबली होने का विश्वास हो जाए। दुन्दुभि का शरीर किसी महापर्वत के समान विशालकाय था। ऐसे बलवान् राक्षस को भी बालि ने मार कर दूर फेंक दिया था।

**आंग्लम्**— In order to convince Śrī Rāma (of Vālī's strength) Sugrīva actually showed to him the (exceptionally) tall skeleton of (the demon) *Dundubhi* (killed by Vālī), which looked like a big mountain (and which had been disdainfully kicked away to a long distance by Vālī.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

सुग्रीवो महापर्वतसंनिभम् = सुग्रीवः + महापर्वतसंनिभम् (विसर्ग-सन्धिः)

(ख) **समासः**

राघवप्रत्ययार्थम् – राघवस्य प्रत्ययः राघवप्रत्ययः (ष० तत्पु०); तस्मै राघवप्रत्ययार्थम्* (च० तत्पु०)

महापर्वतसन्निभम् – महांश्चासौ पर्वतः महापर्वतः (कर्मधारयः); महापर्वतेन संनिभः महापर्वतसंनिभः (तृ० तत्पु०) तम्

(ii) **कोशः**

प्रत्ययः – प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु (अमरकोशः)

---

## अभ्यासः – 42

### (श्लोकः 64)

1. **पदविश्लेषणम् आधृत्य उत्तरं लिखत–**

[ **पदविश्लेषण के आधार पर उत्तर लिखें।** Answer the questions on the basis of the word-analysis.]

**यथा–** (क) कः दर्शयामास ? (अ० पुं० प्र० एक०) ........**सुग्रीवः**....

(ख) सः किं दर्शयामास ? (अ० पुं० द्विती० एक० विशेष्यम्)

(ग) सः कीदृशं कायं दर्शयामास ? (अ० पुं० द्विती० एक० विशेषणम्)

(घ) सः कस्य कायं दर्शयामास ? (अ० पुं० द्विती० एक० विशेषणम्)

(ङ) सः किमर्थं तत् दर्शयामास ? (अ० नपुं० द्विती० एक० क्रियाविशेषणम्).....

2. **यथोचितं विभक्तिं प्रयुज्य रिक्तस्थानं पूरयत–**

[ **उचित विभक्ति का प्रयोग कर रिक्तस्थान भरें।** Fill in the blanks by applying appropriate case-endings to the words.]

(क) सुग्रीवः कायं दर्शयामास। (दुन्दुभि)

(ख) दुन्दुभेः कायम् आसीत्। (उत्तम)

(ग) वानरराजः आसीत्। (सुग्रीव)

(घ) सुग्रीवः तत् दर्शयामास। (राम)

(ङ) सः दुन्दुभेः कायं दर्शयामास। (महापर्वतसन्निभ)

---

* *अर्थशब्देन नित्यसमासः*

3. **श्लोकस्थं विशेषण-विशेष्यसम्बन्धं दर्शयत–**

[**श्लोकस्थ विशेषण-विशेष्य सम्बन्ध को दिखाएं।** Show the relationship between the qualifiers and the qualificands in the verse.]

| **विशेषणपदम्** | **विशेष्यपदम्** |
|---|---|

4. **विग्रहवाक्यं लिखत--**

[**विग्रहवाक्य लिखें।** Write the analytical sentence.]

| | | | | |
|---|---|---|---|---|
| यथा– | (क) | राघवप्रत्ययार्थम् | = | **राघवस्य प्रत्ययः राघवप्रत्ययः तस्मै** । |
| | (ख) | वनगमनार्थम् | = | ...................................... । |
| | (ग) | फलभक्षणार्थम् | = | । |
| | (घ) | पुस्तकपठनार्थम् | = | । |
| | (ङ) | प्रत्ययार्थम् | = | **प्रत्ययाय इति प्रत्ययार्थम्** । |
| | (च) | सूचनार्थम् | = | ...................................... । |
| | (छ) | ज्ञापनार्थम् | = | । |
| | (ज) | प्रेषणार्थम् | = | । |
| | (झ) | दानार्थम् | = | । |

5. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[**दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) प्रत्यय (विश्वास) (ख) काय (ग) उत्तम (घ) संनिभ

**श्लोकः**

**उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः ।**
**पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥ 65 ॥**

**पदच्छेदः**

उत्स्मयित्वा महा-बाहुः प्रेक्ष्य च अस्थि महा-बलः ।
पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दश-योजनम् ॥ 65 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| उत्स्मयित्वा | क्त्वान्तम् अव्ययम् | पादाङ्गुष्ठेन | अ० पुं० तृ० एक० समस्तम् |
| महाबाहुः | उ० पुं० प्र० एक० समस्तम् | चिक्षेप | क्षिप्- कर्तरि लिट् प्रपु० एक० |
| प्रेक्ष्य | ल्यबन्तम् अव्ययम् | | |
| च | अव्ययम् | सम्पूर्णम् | अ० नपुं० द्विती० एक० |
| अस्थि | इ० नपुं० द्विती० एक० | दशयोजनम् | अ० नपुं० द्विती० एक० समस्तम् |
| महाबलः | अ० पुं० प्र० एक० समस्तम् | | |

**आकाङ्क्षा**

**(रामः) चिक्षेप।**

| | |
|---|---|
| कीदृशः रामः अस्थि चिक्षेप ? | महाबाहुः रामः अस्थि चिक्षेप। |
| पुनश्च कीदृशः रामः ? | महाबलः। |
| रामः किं चिक्षेप ? | रामः अस्थि चिक्षेप। |
| रामः केन चिक्षेप ? | रामः पादाङ्गुष्ठेन चिक्षेप। |
| रामः कियद् दूरम् अस्थि चिक्षेप ? | रामः सम्पूर्णं दशयोजनम् अस्थि चिक्षेप। |
| रामः किं कृत्वा अस्थि चिक्षेप ? | रामः प्रेक्ष्य अस्थि चिक्षेप। |
| पुनश्च किं कृत्वा अस्थि चिक्षेप ? | उत्स्मयित्वा च अस्थि चिक्षेप। |

**अन्वयः**

महाबाहुः महाबलः (रामः) अस्थि प्रेक्ष्य उत्स्मयित्वा च पादाङ्गुष्ठेन सम्पूर्णं दशयोजनं चिक्षेप।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| महाबाहुः | विशालबाहुः | लम्बे बाहु वाला | the mighty armed |
| महाबलः | महाशक्तिः | महाबली | possessed of extra ordinary strength |
| अस्थि | कीकसम् | अस्थि (को) | bone |
| प्रेक्ष्य | दृष्ट्वा | देखकर | glaring |
| उत्स्मयित्वा | मन्दं विहस्य च | और हँसकर | smiling |
| पादाङ्गुष्ठेन | चरणाङ्गुष्ठेन | पाँव के अंगूठे से | with his big toe |
| सम्पूर्णं | सम्पूर्णम् | पूरे | full |
| दशयोजनम् | दशयोजनपरिमितम् | दश योजन तक | distance of eight miles |
| चिक्षेप | अक्षिपत् | फेंका | hurled |

**भावार्थः**

**संस्कृतम्**– महाशक्तिः राघवः दुन्दुभेः अस्थि समूहं दृष्ट्वा विहस्य च पादस्य अङ्गुष्ठेन दशयोजनं यावत् अक्षिपत्।

**हिन्दी**– महाबलशाली श्री राम ने दुन्दुभि के अस्थि समूह को देखा और हँसकर उसे अपने पैर के अंगूठे से दशयोजन दूर तक फेंक दिया।

**आंग्लम्**– Smiling (at this) and gazing on the skeleton, the mighty-armed Rāma, who possessed extraordinary strength, hurled it with his big toe to a distance of full eighty miles.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

प्रेक्ष्य – प्र + ईक्ष्य (गुण-सन्धिः)

चास्थि – च + अस्थि (दीर्घ-सन्धिः)

पादाङ्गुष्ठेन – पाद + अङ्गुष्ठेन (दीर्घ-सन्धिः)

सप्तैकेन – सप्त + एकेन (वृद्धि-सन्धिः)

| | | |
|---|---|---|
| महेषुणा | – | महा + इषुणा (गुण-सन्धिः) |
| चैव | – | च + एव (वृद्धि-सन्धिः) |

**(ख) समासः**

| | | |
|---|---|---|
| महाबाहुः | – | महान्तौ बाहू यस्य (बहुव्रीहिः) |
| महाबलः | – | महद् बलं यस्य (बहुव्रीहिः) |
| पादाङ्गुष्ठेन | – | पादस्य अङ्गुष्ठः पादाङ्गुष्ठः (ष० तत्पु०) तेन |
| महेषुणा | – | महान् च सः इषुः महेषुः (कर्मधारयः) तेन |

**(ग) कृदन्ताः**

| | | |
|---|---|---|
| उत्स्मयित्वा[1] | – | उत् + स्मि + क्त्वा |
| प्रेक्ष्य | – | प्र-ईक्ष् + ल्यप् |
| जनयन् | – | जन् + णिच् + शतृ (लक्षणहेत्वोः क्रियायाः) |
| रसातलः | – | अधोलोकेषु षष्ठः लोकः । अतल-वितल-सुतल-तलातल-महातल-रसातल-पाताल इति सप्त अधोलोकाः । |

---

## अभ्यासः - 43
## (श्लोकः 65)

1. **श्लोकं पठित्वा उत्तरं लिखत–**

[ **श्लोक पढ़कर उत्तर लिखें।** Answer the questions on the basis of the verse.]

(क) श्लोके 'महाबलः' इति कस्य विशेषणम् ? ।

(ख) रामः अस्थि किम् अकरोत् । ।

(ग) अस्थि कियद् दूरं गतम् । ।

(घ) श्लोके "प्रेक्ष्य" इत्यस्य कर्म किम् ? ।

(ङ) रामः केन अस्थि चिक्षेप । ।

---

1. *आर्षः प्रयोगः*

**2. मञ्जूषातः शब्दान् स्वीकृत्य रिक्तस्थानं पूरयत–**

[**मञ्जूषा से शब्द लेकर रिक्तस्थान भरें।** Fill in the blanks with the words given in the box.]

| **अस्थि, दशयोजनम्, महाबाहुः, रामम्** |
|---|

सुग्रीवः ............ अस्थि दर्शयामास। रामः पादाङ्गुष्ठेन ............, ............ क्षिप्तवान्।

**3. विग्रहं लिखत–**

[**विग्रह लिखें।** Write the analytical sentence.]

| | | | | |
|---|---|---|---|---|
| यथा– | (क) | महेषुः | **महान् च असौ इषुः** | (**कर्मधारयः**) |
| | (ख) | महाबाणः | | (............) |
| | (ग) | महापुरुषः | | (............) |
| | (घ) | महादेवः | | (............) |
| | (ङ) | महर्षिः | | (............) |
| | (च) | महारथः | | (............) |
| | (छ) | महाबाहुः | **महान्तौ बाहू यस्य** | (**बहुव्रीहिः**) |
| | (ज) | महाबलः | | (............) |
| | (झ) | महातेजाः | | (............) |
| | (ञ) | महायशाः | | (............) |

**4. कोष्ठके प्रदत्तं प्रकृति-प्रत्यय-विभागम् अनुसृत्य पदं प्रयुज्य रिक्तं स्थानं पूरयत–**

[**कोष्ठक में प्रदत्त प्रकृतिप्रत्यय-विभाग के अनुसार पद प्रयोग कर रिक्त स्थान पूरा करें।** Complete the sentence by forming words from the base and suffix given in the bracket.]

रामः महापर्वतसंनिभम् अस्थि ............ (प्र+ईक्ष+ल्यप्) मन्दं हसितवान्, तत् अस्थि ............ (पाद-अङ्गुष्ठ+टा) दशयोजनं क्षिप्तवान् पुनः सप्त ............ (साल + शस्) एकेन महेषुणा क्षिप्तवान् सुग्रीवे प्रत्ययं............(जन् + णिच् + शतृ) गिरिं बिभेद। पुनः............ (रसातल + अम्) च बिभेद।

**श्लोकः**

**बिभेद च पुनः सालान् सप्तैकेन महेषुणा ।**
**गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥ 66 ॥**

**पदच्छेदः**

बिभेद च पुनः सालान् सप्त एकेन महेषुणा ।
गिरिं रसातलं च एव जनयन् प्रत्ययं तदा ॥ 66 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| बिभेद | भिद्-कर्तरि लिट् प्रपु० एक० | महेषुणा | उ० पुं० तृ० एक० समस्तम् |
| | | गिरिम् | इ० पुं० द्वि० एक० समस्तम् |
| च | अव्ययम् | रसातलम् | अ० नपुं० द्विती० एक० |
| पुनः | अव्ययम् | च | अव्ययम् |
| सालान् | अ० पुं० द्विती० बहु० | एव | अव्ययम् |
| सप्त | न्० पुं० द्विती० बहु० | जनयन् | जनयत्- तृ० पुं० प्र० एक० |
| एकेन | अ० पुं० तृ० एक० | प्रत्ययम् | अ० पुं० द्विती० एक० |
| | | तदा | अव्ययम् |

**आकाङ्क्षा**

**बिभेद ।**

| | |
|---|---|
| कः बिभेद ? | (रामः) बिभेद । |
| रामः केन सप्त सालान् बिभेद ? | (रामः) एकेन एव महेषुणा सप्त सालान् बिभेद । |
| किं जनयन् बिभेद ? | प्रत्ययं जनयन् बिभेद । |
| रामः एकेन महेषुणा किं किं बिभेद ? | (रामः) एकेन महेषुणा सालान् गिरिं रसातलं च बिभेद । |
| कस्य प्रत्ययं जनयन् बिभेद ? | (रामः) (सुग्रीवस्य) प्रत्ययं जनयन् बिभेद । |

**अन्वयः**

तदा प्रत्ययं जनयन् एकेन महेषुणा सप्त सालान् गिरिं रसातलं च पुनः बिभेद ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| पुनश्च | अपि च | पुनः | again, Further |
| प्रत्ययम् | विश्वासम् | विश्वास (को) | confidence |
| जनयन् | उत्पादयन् | जगाते हुए | in order to inspire |
| तदा | तस्मिन् काले | तब | on that occasion |
| एकेन एव | एकेन एव | एक ही | with a single |
| महेषुणा | महता बाणेन | महान् बाण से | mighty shaft |
| सप्त सालान् | सप्तसंख्याकान् सालवृक्षान् | सात साल वृक्षों को | seven palmyra trees |
| गिरिम् | पर्वतम् | पर्वत को | a hillock |
| च | तथा | और | as well as |
| रसातलम् | अधोलोकम् | पाताल लोक को | the sixth subterra-nean plane |
| बिभेद | अभिनत् | भेद दिया | pierced |

**भावार्थः**

**संस्कृतम्**— रामः स्वबलविषये सुग्रीवस्य सन्देहं ज्ञात्वा तस्मिन् विश्वासं जनयन् एकेन एव बाणेन सप्त सालान् तत्र विद्यमानं पर्वतं तथा च रसातलं विदारयामास।

**हिन्दी**— अपने बल के विषय में सुग्रीव को सन्देहयुक्त जानकर उसके सन्देह को दूर करने के लिए अपने एक ही विशाल बाण से सात सालवृक्षों को तथा वहाँ पर विद्यमान पर्वत तथा रसातल को विदीर्ण कर डाला।

**आंग्लम्**— Nay, in order to inspire confidence in (the mind of) Sugrīva Śrī Rāma further pierced on that (very) occasion with a single mighty shaft (one after another as many as) seven palmyra trees (standing in a line adjacent to one another), a hillock (standing by) as well as *Rasātala* (the sixth subterranean plane including the five preceding ones viz., *Atala, Vitala, Sutala, Talātala* and *Mahātala*).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

सप्त + एकेन = सप्तैकेन (वृद्धि-सन्धिः)

**(ख) कृदन्तः**

जन् + णिच् + शतृ = जनयन्

**श्लोकः**

**ततः प्रीतमनास्तेन विश्वस्तः सः महाकपिः ।**
**किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ 67 ॥**

**पदच्छेदः**

ततः प्रीत-मनाः तेन विश्वस्तः सः महा-कपिः
किष्किन्धाम् राम-सहितः जगाम च गुहाम् तदा ॥ 67 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | अव्ययम् | महाकपिः | इ० पुं० प्र० एक० समस्तम् |
| प्रीत-मनाः | प्रीतमनस्- स्० पुं० प्र० एक० समस्तम् | किष्किन्धाम् | आ० स्त्री० द्वितीं० एक० |
| तेन | तद्- द्० सर्व० पुं० तृ० एक० | राम-सहितः | अ० पुं० प्र० एक० समस्तम् |
| विश्वस्तः | अ० पुं० प्र० एक० | जगाम | गम्-कर्तरि लिट् प्रपु० एक० |
| सः | तद्- द्० सर्व० पुं० प्र० एक० | च | अव्ययम् |
| | | गुहाम् | आ० स्त्री० द्विती० ए० |
| | | तदा | अव्ययम् |

**आकाङ्क्षा**

**जगाम।**

| | |
|---|---|
| कः जगाम ? | सः महाकपिः जगाम । |
| कीदृशः महाकपिः जगाम ? | विश्वस्तः महाकपिः जगाम । |
| पुनश्च कीदृशः ? | प्रीतमनाः । |
| केन प्रीतमनाः ? | तेन (रामबलेन) प्रीतमनाः । |
| महाकपिः कुत्र जागम ? | महाकपिः किष्किधां गुहां जगाम । |
| केन सहितः जगाम ? | रामसहितः जगाम । |

**अन्वयः**

ततः स महाकपिः तेन प्रीतमनाः विश्वस्तः च तदा रामसहितः किष्किधां गुहां जगाम ।

पदार्थः

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तदनन्तरम् | उसके बाद | then |
| सः | (पूर्वोक्तः) | वह | he (Sugrīva) |
| महाकपिः | वानरः सुग्रीवः | वानर सुग्रीव | the great monkey |
| तेन | तस्मात् | उससे | by him |
| विश्वस्तः | लब्धविश्वासः | विश्वस्त | contended |
| प्रीतमनाः | प्रसन्नचेताः | प्रसन्नचित्त | pleased |
| तदा च | तस्मिन् काले च | तब | then |
| रामसहितः | राघवेण सह | राम के साथ | with Rāma |
| किष्किन्धाम् | किष्किन्धाख्यां नगरीम् | किष्किन्धा | to kiṣkindhā |
| गुहां | गुहाम् | गुफा | cave |
| जगाम | गतवान् | गया | marched |

**भावार्थः**

**संस्कृतम्**– ततः तेन रामबलेन प्रसन्नः विश्वस्तश्च स वानरराजः सुग्रीवः रामसहितः किष्किन्धां गुहां अगच्छत् ।

**हिन्दी**– तब राम के बल से प्रसन्न तथा विश्वस्त सुग्रीव राम के साथ अपनी राजधानी किष्किन्धा गुफा पर गया ।

**आंग्लम्**– Reassured by the latter feat and accompanied by Śrī Rāma, that great monkey (Sugrīva) then marched at once with a mind full of delight to Kiṣkindhā (the capital of Vālī), situated cave-like (in the midst of mountains).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

प्रीतमनास्तेन – प्रीतमनाः + तेन (विसर्ग-सन्धिः)

रामसहितो जगाम – रामसहितः + जगाम (विसर्ग-सन्धिः)

**(ख) समासः**

प्रीतमनाः – प्रीतं मनः यस्य (बहुव्रीहिः)

महाकपिः – महांश्चासौ कपिः (कर्मधारयः)

| | | | |
|---|---|---|---|
| | रामसहितः | – | रामेण सहितः (तृ० तत्पु०) |
| (ग) | **कृदन्तः** | | |
| | विश्वस्तः | – | वि + श्वस् + क्त |
| (घ) | **तद्धितान्तः** | | |
| | तदा | – | तत् + दा |

## अभ्यासः - 44
### (श्लोकः 66-67)

1. **अधोलिखित-समस्तपदानां विग्रहं समास-नाम प्रातिपदिकं च लिखत—**
[ **निम्नलिखित समस्तपदों का विग्रह, समास-नाम एवं प्रातिपदिक लिखें।** Write the analytical sentence, compound name and *prātipadika* of the following compound-words.]

| | **पदम्** | **विग्रहः** | **समासनाम** | **प्रातिपदिकम्** |
|---|---|---|---|---|
| **यथा—** | प्रीतमनाः | **प्रीतं मनः यस्य** | **बहुव्रीहिः** | **प्रीतमनस्** |
| | महामनाः | | | |
| | दुष्टमनाः | | | |
| | खिन्नमनाः | | | |
| | उद्विग्नमनाः | | | |
| | तुष्टमनाः | | | |
| **यथा—** | महायशाः | **महद् यशः यस्य** | **बहुव्रीहिः** | **महायशस्** |
| | महातपाः | | | |
| | महातेजाः | | | |
| | महाबलः | | | |
| | महारथः | | | |
| | महाबाहुः | | | |

2. **शब्दरूपं पूरयत—**
[ **शब्दरूप पूरा करें।** Complete the delclension.]

| | शब्दाः | एक. | द्वि. | बहु. |
|---|---|---|---|---|
| यथा– | चन्द्रमस् | चन्द्रमाः | चन्द्रमसौ | चन्द्रमसः |
| | प्रीतमनस् | | | |
| | महातपस् | | | |
| | महायशस् | | | |
| | खिन्नमनस् | | | |

3. **समाधत्त–**

[**उत्तर दें।** Give the answer.]

(क) सुग्रीवः कस्मिन् विश्वस्तः अभवत् ? ............ ।

(ख) सः केन सह किष्किन्धाम् अगच्छत् ? ।

(ग) श्लोके 'महाकपिः' इति कस्मै प्रयुक्तम् ? ।

(घ) जगाम इति क्रियापदं कस्मिन् लकारे अस्ति। ............ ।

(ङ) "तदा" इत्यत्र कः प्रत्ययः ? ।

4. **पदम् उचित-विभक्त्या योजयत–**

[**पद को उचित विभक्ति से जोड़ें।** Join the word with appropriate case-ending.]

| | | | | |
|---|---|---|---|---|
| यथा– (i) | प्रीतमनसे | | (क) | पञ्चमी |
| (ii) | तेन | | (ख) | द्वितीया |
| (iii) | विश्वस्तः | | (ग) | चतुर्थी |
| (iv) | किष्किन्धाम् | | (घ) | तृतीया |
| (v) | ततः (तस्मात्) | | (ङ) | सप्तमी |
| (vi) | श्रुतवतः | | (च) | प्रथमा |
| (vii) | गतवति | | (छ) | षष्ठी/पञ्चमी |

5. **प्रदत्तस्य विशेष्यपदस्य श्लोकस्थ-विशेषण-पदानि लिखत–**

[**प्रदत्त विशेष्य पद के विशेषण पदों को लिखें।** Wrtie the qualifiers available in the verse for the qualificand given.]

यथा– सुग्रीवः ............ **प्रीतमनाः**

**श्लोकः**

**ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।**
**तेन नादेन महता निर्जगाम हरीश्वरः ॥ 68 ॥**

**पदच्छेदः**

ततः अगर्जत् हरि-वरः सुग्रीवः हेम-पिङ्गलः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ 68 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | तद्धितान्तम् अव्ययम् | तेन | तद्- द्० सर्व० पुं० तृ० एक० |
| अगर्जत् | गर्ज्-कर्तरि लङ् प्रपु० एक० | | |
| हरिवरः | अ० पुं० प्र० एक० समस्तम् | नादेन | अ० पुं० तृ० एक० |
| | | महता | त्० पुं० तृ० एक० |
| सुग्रीवः | अ० पुं० प्र० एक० | निर्जगाम | निर् + गम्-कर्तरि लिट् प्रपु० एक० |
| हेमपिङ्गलः | अ० पुं० प्र० एक० समस्तम् | | |
| | | हरीश्वरः | अ० पुं० प्र० एक० समस्तम् |

**आकाङ्क्षा**

**अगर्जत् ।**

| | |
|---|---|
| ततः कः अगर्जत् ? | सुग्रीवः अगर्जत् । |
| कीदृशः सुग्रीवः अगर्जत् ? | हेमपिङ्गलः सुग्रीवः अगर्जत् । |
| पुनश्च कीदृशः सुग्रीवः ? | हरिवरः सुग्रीवः । |
| कः निर्जगाम । | हरीश्वरः निर्जगाम । |
| हरीश्वरः केन कारणेन निर्जगाम ? | हरीश्वरः तेन नादेन निर्जगाम । |
| कीदृशेन नादेन निर्जगाम ? | महता नादेन निर्जगाम । |

**अन्वयः**

ततः हेमपिङ्गलः हरिवरः सुग्रीवः **अगर्जत् तेन** महता नादेन हरीश्वरः **(वाली) निर्जगाम ।**

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तदनन्तरम् | उसके बाद | Further |
| हेमपिङ्गलः | सुवर्णवर्णः | सुनहरा भूरा | tawny as gold |
| हरिवरः | वानरश्रेष्ठः | वानर श्रेष्ठ | the monkey chief |
| सुग्रीवः | सुग्रीव-नामा | सुग्रीव | Sugrīva |
| अगर्जत् | गर्जितवान् | गरजा | roared |
| तेन | गर्जनेन | उससे | (distracted) by that |
| महता | उच्चैः | ऊँची | great roar |
| नादेन | ध्वनिना | ध्वनि से | the king of the |
| हरीश्वरः | वानरराजः (वाली) | वानर राज (वाली) | king of the monkeys (Vālī) |
| निर्जगाम | निरगच्छत् | निकला | Sallied forth |

**भावार्थः**

**संस्कृतम्**– ततः रामबलेन उत्साहितः सः सुवर्णवर्णः सुग्रीवः महत्-गर्जनम् अकरोत्। तेन गर्जनेन स महाबली वाली स्वगुहाया बहिः आजगाम।

**हिन्दी**– तब राम के बल से उत्साहित वह सुग्रीव गर्जना करने लगा। उसकी महती गर्जना को सुनकर वालि गुफा से बाहर आ गया।

**आंग्लम्**– Then roared Sugrīva, the monkey-chief, who was tawny as gold (in appearance). Distracted by that great (unsusual) roar, Vālī (the king of the monkeys) sallied forth (to meet Sugrīva).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

ततोऽगर्जत् – ततः + अगर्जत् (विसर्ग-सन्धिः)

सुग्रीवो हेमपिङ्गलः – सुग्रीवः + हेमपिङ्गलः (विसर्ग-सन्धिः)

अगर्जद्धरिवरः – अगर्जत् + हरिवरः (पूर्वसवर्ण-सन्धिः)

**(ख) समासः**

| | | |
|---|---|---|
| हरिवरः | – | हरिषु वरः (स० तत्पु०) |
| हेमपिङ्गलः | – | हेम इव पिङ्गलः (कर्मधारयः) |
| हरीश्वरः | – | हरीणाम् + ईश्वरः (ष० तत्पु०) |

**(ii) पर्यायवाचिनः शब्दाः**

| | | |
|---|---|---|
| हरिः | – | वानरः, कपिः, मर्कटः |
| नादः | – | ध्वनिः, शब्दः, रवः |
| हेम | – | स्वर्णम्, काञ्चनम्, सुवर्णम् |

---

## अभ्यासः - 45
### (श्लोकः 68)

1. **यथानिर्देशं श्लोकात् पदानि चित्वा लिखत–**

[ **यथानिर्देश श्लोक से पद चुनकर लिखें।** Compile the words from the verse as required.]

| **प्रथमान्तानि** | **क्रियापदे** | **तृतीयान्तानि** |
|---|---|---|
| | | |

2. **यथाश्लोकं विशेष्य-विशेषणे योजयत–**

[ **श्लोकानुसार विशेषण एवं विशेष्य को यथोचित मिलाएँ।** Join the qualifier and qualificand as per the verse.]

| | | | |
|---|---|---|---|
| (i) | हरिवरः हेमपिङ्गलः | (क) | नादेन |
| (ii) | तेन महता | (ख) | (वाली) |
| (iii) | हरीश्वरः | (ग) | सुग्रीवः |

3. **समस्तपदानि उचित-विग्रहवाक्येन योजयत—**

[ **समस्तपदों को उचित विग्रहवाक्य से मिलाएं।** Join the compound-word with its analytical sentence.]

**यथा—**

| | | | |
|---|---|---|---|
| (i) | नृपवरः | (क) | हरीणाम् ईश्वरः |
| (ii) | हरीश्वरः | (ख) | हरिषु वरः |
| (iii) | हरिवरः | (ग) | नृपेषु वरः |
| (iv) | यतिवरः | (घ) | हेम इव पिङ्गलः |
| (v) | रामबलम् | (ङ) | कृष्णः वर्णः यस्य |
| (vi) | कृष्णवर्णः | (च) | यतिषु वरः |
| (vii) | घनश्यामः | (छ) | घन इव श्यामः |
| (viii) | हेमपिङ्गलः | (ज) | रामस्य बलम् |

4. **विसन्धि कुरुत—**

[ **सन्धिविच्छेद करें।** Disjoin the *sandhi*.]

(i) अगर्जद्धरिः =

(ii) तद्धेमवर्णम् =

(iii) महद्धविः =

(iv) तद्धितः =

(v) तद्धृदयम् =

5. **श्लोकस्थे क्रियापदे सूचयित्वा तयोः तस्मिन् लकारे रूपाणि लिखत—**

[ **श्लोक के दोनों क्रियापदों की सूचना देते हुए उस लकार में उनके रूप लिखें।** Point out the two verbal words of the verse and write their verbal forms in that lakāra.]

**प्रपु.**

**मपु.**

**उपु.**

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) गर्ज् (लटि, लिटि लङि च) (ख) वर (ग) पिङ्गल (घ) नाद (ङ) महत्

**श्लोकः**

> **अनुमान्य तदा तारां सुग्रीवेण समागतः ।**
> **निजघान च तत्रैनं शरेणैकेन राघवः ॥ 69 ॥**

**पदच्छेदः**

अनु-मान्य तदा तारां सुग्रीवेग समागतः ।
नि-जघान च तत्र एनं शरेण एकेन राघवः ॥ 69 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| अनुमान्य | ल्यबन्तम् अव्ययम् | च | अव्ययम् |
| तदा | अव्ययम् | तत्र | अव्ययम् |
| ताराम् | आ० स्त्री० द्विती० एक० | एनम् | एतद्- द्० पुं० द्विती० |
| सुग्रीवेण | अ० पुं० तृ० एक० | | एक० |
| समागतः | अ० पुं० प्र० एक० | शरेण | अ० पुं० तृ० एक० |
| निजघान | नि+हन्-कर्तरि लिट् | एकेन | अ० पुं० तृ० एक० |
| | प्रपु० एक० | राघवः | अ० पुं० प्र० एक० |

**आकाङ्क्षा**

**(वाली) समागतः।**

| | |
|---|---|
| (वाली) कदा समागतः ? | (वाली) तदा समागतः । |
| वाली किं कृत्वा समागतः ? | अनुमान्य समागतः । |
| काम् अनुमान्य समागतः ? | ताराम् अनुमान्य समागतः । |
| वाली केन (योद्धुं) समागतः ? | (वाली) सुग्रीवेण (योद्धुं) समागतः । |

**निजघान।**

| | |
|---|---|
| कः निजघान ? | राघवः निजघान । |
| राघवः कं निजघान ? | राघवः एनं (वालिनं) निजघान । |
| एनं (वालिनं) कुत्र निजघान ? | एनं वालिनं तत्र निजघान । |

राघवः केन वालिनं निजघान ? राघवः शरेण वालिनं निजघान।

कियता शरेण निजघान ? एकेन शरेण निजघान।

**अन्वयः**

तदा वाली ताराम् अनुमान्य सुग्रीवेण (योद्धुं) समागतः। राघवः च एनं तत्र एकेन शरेण निजघान।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| तदा | तदानीम् | तब | then |
| ताराम् | तारा-नाम्नीं जायाम् | तारा (बाली की पत्नी) को | Tārā (Vālī's wife) |
| अनुमान्य | प्रबोध्य | मनाकर | having reassured |
| सुग्रीवेण (योद्धुम्) | सुग्रीवेण (योद्धुम्) | सुग्रीव से (युद्ध के लिए) | convinced with sugrīva |
| समागतः | आगतवान् | आया | came |
| राघवः | रामः | राम ने | Rāma |
| च | च | और | and |
| तत्र | संयुगे | युद्ध में | in the course of that encounter |
| एकेन | एकेन | एक | single |
| शरेण | बाणेन | बाण से | arrow |
| एनम् | वालिनम् | इसे (बाली को) | him (Vālī) |
| निजघान | हतवान् | मार दिया | killed |

**भावार्थः**

**संस्कृतम्**— सुग्रीवस्य गर्जनं श्रुत्वा स्वभार्यां तारां प्रबोध्य अनुमतिं च प्राप्य सुग्रीवेण सह योद्धुं वाली बहिः आगच्छत्। रामः एकेन बाणेन एव वालिनं तत्र हतवान्।

**हिन्दी**— सुग्रीव की गर्जना सुनकर अपनी पत्नी तारा को समझाकर वालि गुफा से बाहर आया। राम ने अपने एक ही बाण से वालि का वध कर दिया।

**आंग्लम्**— Reassuring Tārā (his devoted and sagacious wife, who discouraged him by pleading that Sugrīva had since secured the alliance of Śrī Rāma and as such could no longer be conquered), he then closed with Sugrīva and in

the course of that (very) encounter Śrī Rāma (the celebrated scion of Raghu) disposed of Vālī with a single arrow.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

तत्रैनम् – तत्र + एनम् (वृद्धि-सन्धिः)

शरेणैकेन – शरेण + एकेन (वृद्धि-सन्धिः)

(ख) **कृदन्तौ**

समागतः – सम् + आ + गम्+क्त

अनुमान्य – अनु + मान् + ल्यप्

(ग) **तद्धितान्तौ**

तदा – तद् + दा

राघवः – रघु + अण् (रघोः अपत्यं पुमान् राघवः 'तस्यापत्यम्' इति अण्)

(ii) **पर्यायवाचिनः शब्दाः**

शरः – बाणः, इषुः, विशिखः

---

### अभ्यासः - 46
### (श्लोकः 69)

1. **मञ्जूषातः अर्थं स्वीकृत्य लिखत–**

[ **मञ्जूषा से अर्थ चुनकर लिखें।** Pick up the meaning from the box.]

| **इषुः, अनुमतिं प्राप्य, हतवान्, ध्वनिः, तस्मिन् स्थाने, तस्मिन् समये** |
|---|

(i) नादः (ii) शरः

(iii) अनुमान्य (iv) निजघान

(v) तदा (vi) तत्र

2. **रिक्त-स्थाने विभक्ति-युक्तं पदं स्थापयत–**

**[ रिक्तस्थान में विभक्तियुक्त पद रखें।** Put a complete word in the blank space.]

यथा– (क) रामः एकेन ....**शरेण**.... वालिनं हतवान्। (शर)

(ख) रामः ........ हतवान्। (शर)

(ग) रामः ........ अस्थि क्षिप्तवान्। (पादाङ्गुष्ठ)

(घ) खरः ........ प्राहरत्। (खड्ग)

(ङ) सुग्रीवः रामस्य ........ आश्वस्तः अभवत्। (शक्ति)

3. **उचितं पदं चिह्नीकुरुत–**

**[ उचित पद को चिह्नित करें।** Mark the appropriate word.]

यथा– (क) वाली ........ अनुमान्य समागतः। (ताराम्✓/अङ्गदम्)

(ख) सुग्रीवः ........ सह योद्धुम् अगच्छत्। (वालिना/अङ्गदेन)

(ग) रामः ........ शरेण वालिनं हतवान्। (एकेन/अनेकैः)

(घ) वाली ........ गर्जनं श्रुत्वा बहिः आगच्छत्। (सुग्रीवस्य/रामस्य)

(ङ) वाली ........ समागतः। (अङ्गदेन सह/एकाकी)

4. **श्लोकस्थ-पदानां लिङ्गदृष्ट्या वर्गीकरणं कुरुत–**

**[ श्लोकस्थ पदों का लिङ्ग की दृष्टि से वर्गीकरण करें।** Classify the words according to the gender.]

पुं. शब्दाः............, ............, ............, ............ । स्त्री. शब्दः............

5. **श्लोकस्थं धातुयुक्तं पदं ( तिङन्तं कृदन्तं च) उद्धृत्य लिखत–**

**[ श्लोकस्थ धातुयुक्त (तिङन्त या कृदन्त) पदों को चुनकर लिखें।**
Pick up the word with roots from śloka.

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

**[ दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) अनु + मन् (लटि, लङि च) (ख) एनम् (ग) शर (घ) एक

**श्लोकः**

**ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ।**
**सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ 70 ॥**

**पदच्छेदः**

ततः सुग्रीव-वचनात् हत्वा वालिनम् आहवे ।
सुग्रीवम् एव तद्-राज्ये राघवः प्रत्यपादयत् ॥ 70 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| ततः | तद्धितान्तम् अव्ययम् | सुग्रीवम् | अ० पुं० द्विती० एक० |
| सुग्रीव-वचनात् | अ० नपुं० प० एक० | एव | अव्ययम् |
| | समस्तम् | तद्राज्ये | अ० नपुं० स० एक० |
| हत्वा | क्त्वान्तम् अव्ययम् | | समस्तम् |
| वालिनम् | वालिन्- न्० पुं० द्विती० | राघवः | अ० पुं० प्र० एक० |
| | एक० | प्रत्यपादयत् | प्रति+पद्+णिच्-कर्तरि |
| आहवे | अ० पुं० स० एक० | | लङ् प्रपु० एक० |

**आकाङ्क्षा**

**प्रत्यपादयत् ।**

| | |
|---|---|
| कः प्रत्यपादयत् ? | राघवः प्रत्यपादयत् । |
| राघवः कं प्रत्यपादयत् ? | राघवः सुग्रीवं प्रत्यपादयत् । |
| राघवः सुग्रीवं कुत्र प्रत्यपादयत् ? | राघवः सुग्रीवं तद्राज्ये प्रत्यपादयत् । |
| राघवः किं कृत्वा सुग्रीवं प्रत्यपादयत् ? | राघवः वालिनं हत्वा सुग्रीवं तद्राज्ये प्रत्यपादयत् । |
| वालिनं कुत्र हत्वा प्रत्यपादयत् ? | वालिनम् आहवे हत्वा प्रत्यपादयत् । |
| राघवः कस्य वचनात् वालिनं हतवान् ? | सुग्रीववचनात् । |

**अन्वयः**

ततः राघवः सुग्रीववचनात् आहवे वालिनं हत्वा तद्राज्ये सुग्रीवम् एव प्रत्यपादयत् ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तदनन्तरम् | तब | then |
| सुग्रीववचनात् | सुग्रीवस्य प्रार्थनया | सुग्रीव की प्रार्थना पर | due to Sugrīva's plea |
| आहवे | युद्धे | युद्ध में | in an encounter |
| वालिनम् | वालिनामानं कपिम् | वाली को | to Vālī |
| हत्वा | निहत्य | मारकर | having killed |
| राघवः | रामः | राम ने | the scion of Raghu |
| तद्राज्ये | किष्किन्धाराज्ये | उस राज्य में | in Vālī's throne |
| सुग्रीवम् एव | सुग्रीवाभिधं वानरश्रेष्ठम् | सुग्रीव को | Sugrīva himself |
| प्रत्यपादयत् | प्रतिष्ठापितवान् | बैठाया | installed |

**भावार्थः**

**संस्कृतम्**– सुग्रीवस्य आग्रहयुक्तं वचनं श्रुत्वा रामः युद्धे वालिनं हतवान्। वालि-वधानन्तरं श्रीरामः सुग्रीवम् एव किष्किन्धासिंहासने उपावेशयत्।

**हिन्दी**– सुग्रीव के आग्रह वचनों को सुनकर राम ने युद्ध में वाली को मारकर उसके छोटे भाई सुग्रीव को ही किष्किन्धा के सिंहासन पर बैठाया।

**आंग्लम्**– Having (thus) killed Vālī on the battle field at the instance of Sugrīva, Śrī Rāma (a scion of Raghu) then installed Sugrīva himself on Vālī's throne.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

वचनाद्धत्वा – वचनात् + हत्वा (पूर्वसवर्ण-सन्धिः)

तद्राज्ये – तद् + राज्ये (जश्त्व-सन्धिः)

प्रत्यपादयत् – प्रति + अपादयत् (यण्-सन्धिः)

(ख) **समासः**

सुग्रीववचनात् – सुग्रीवस्य वचनं सुग्रीववचनम् (ष० तत्पु०) तस्मात्

तद्राज्ये – तस्य राज्यं तद्राज्यम् (ष० तत्पु०) तस्मिन्

**(ग) कृदन्तः**

हत्वा – हन् + क्त्वा

**(घ) तद्धितान्तः**

राघवः – रघोः अपत्यं पुमान् (रघु + अण्)

(ii) **पर्यायवाचिनः शब्दाः**

आहवः – युद्धम्, रणम्, संगरः, समरः

राघवः – रघुपतिः, रघुनाथः, रघुनन्दनः

वचनम् – कथनम्, निवेदनम्, उक्तिः

---

## अभ्यासः - 47
### (श्लोकः 70)

1. **श्लोकात् पदानि चित्वा लिखत–**

[ **श्लोक से पद चुनकर लिखें।** Write the word from the verse.]

(क) अ० पुं० द्विती० एक० =

(ख) अ० नपुं० प० एक० समस्तम् =

(ग) अ० पुं० स० एक० =

(घ) अ० नपुं० स० एक० =

(ङ) अ० पुं० प्र० एक० =

(च) प्रति + पद् कर्तरि लङ् प्रपु० एक० =

2. **सन्धि कुरुत–**

[ **सन्धि करें।** Make *sandhi*.]

**यथा–** (क) वचनात् + हत्वा = ........**वचनाद्धत्वा**........

(ख) वाक् + हरिः =

(ग) उत् + हतः =

(घ) तत् + झटिति =

(ङ) त्वत् + ढक्काम् =

(च) तत् + धनम् =

3. **विपरीतार्थकं शब्दं लिखत–**

[ **विपरीतार्थक शब्द लिखें।** Write the antonyms.]

(क) हत्वा =

(ख) उपरि =

(ग) मित्रम् =

(घ) प्रभुः =

(ङ) गत्वा =

(च) नयति =

4. **कोष्ठके प्रदत्तानां सोपसर्ग-धातूनां लङ्लकारे रूपाणि लिखत–**

[ **कोष्ठक में दिये गये सोपसर्ग धातुओं का लङ्लकार में रूप लिखें।** Write the verbal forms in **लङ् लकार** of the roots given in the bracket preceded by the *upsarga*.]

**यथा–** (क) ......**प्रत्यपद्यत** = (प्रति-पद्)

(ख) = (प्रति-शृ)

(ग) = (परि-चि)

(घ) = (प्रति-भाषा)

(ङ) = (प्रति-वद्)

(च) = (प्रति-आ-गम्)

(छ) = (परि-भूष्)

5. **श्लोकस्य अन्वयं पूरयत–**

[ **श्लोक का अन्वय पूरा करें।** Complete the construction of the verse.]

ततः सुग्रीववचनात् वालिनं तद्राज्ये एव ............................ ।

**श्लोकः**

**स च सर्वान् समानीय वानरान् वानरर्षभः ।**
**दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ 71 ॥**

**पदच्छेदः**

सः च सर्वान् समानीय वानरान् वानरर्षभः ।
दिशः प्र-स्थापयामास दिदृक्षुः जनकात्मजाम् ॥ 71 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सः | तद्- द्० सर्व० पुं० प्र० एक० | | समस्तम् |
| च | अव्ययम् | दिशः | दिश्- श्० स्त्री० द्विती० बहु० |
| सर्वान् | अ० सर्व० पुं० द्विती० बहु० | प्रस्थापयामास | प्र+स्था+णिच्- कर्तरि लिट् प्रपु० एक० |
| समानीय | ल्यबन्तम् अव्ययम् | दिदृक्षुः | उ० पुं० प्र० एक० |
| वानरान् | अ० पुं० द्विती० बहु० | जनकात्मजाम् | आ० स्त्री० द्विती० एक० |
| वानरर्षभः | अ० पुं० प्र० एक० | | समस्तम् |

**आकाङ्क्षा**

**प्रस्थापयामास ।**

| | |
|---|---|
| कः प्रस्थापयामास ? | सः वानरर्षभः (सुग्रीवः) प्रस्थापयामास । |
| कीदृशः वानरर्षभः ? | दिदृक्षुः वानरर्षभः । |
| कां दिदृक्षुः ? | जनकात्मजाम् दिदृक्षुः । |
| जनकात्मजां दिदृक्षुः वानरर्षभः | |
| किं कृत्वा प्रस्थापयामास ? | समानीय प्रस्थापयामास । |
| कान् समानीय प्रस्थापयामास ? | सर्वान् वानरान् समानीय प्रस्थापयामास । |
| वानरान् कुत्र प्रस्थापयामास ? | वानरान् दिशः प्रस्थापयामास । |

**अन्वयः**

सः च वानरर्षभः जनकात्मजां दिदृक्षुः सर्वान् वानरान् समानीय दिशः प्रस्थापयामास।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| सः | सुग्रीवः | वह (सुग्रीव) | He (Sugrīva) |
| वानरर्षभः | कपिश्रेष्ठः | वानरों में श्रेष्ठ | Great among the monkeys |
| जनकात्मजाम् | जनकपुत्रीम् | जनक की पुत्री सीता को | to the daughter of Janaka (Sītā) |
| दिदृक्षुः | द्रष्टुम् इच्छुकः | देखने का इच्छुक | Desirous to see |
| सर्वान् | निखिलान् | सभी | all |
| वानरान् च* | कपीन् च | बन्दरों को | the monkeys |
| समानीय | आकार्य (एकत्रीकृत्य) | बुलाकर (इकट्ठा करके) | bringing together |
| दिशः | चतस्रः आशाः | चारों दिशाओं में | in all directions |
| प्रस्थापयामास | प्रेषयामास | भेजा | sent |

**भावार्थः**

**संस्कृतम्**— स्वाभिषेकानन्तरं कपिश्रेष्ठः सुग्रीवः प्रत्युपकारं प्रदर्शयन् सीता कुत्र वर्तते इति ज्ञातुकामः सर्वाभ्यो दिग्भ्यः कपीन् आकार्य (एकत्रीकृत्य) सर्वाः दिशः प्रति प्रेषयामास।

**हिन्दी**— अपने राज्याभिषेक के अनन्तर कपिश्रेष्ठ सुग्रीव ने जानकी कहाँ है इसका पता लगाने के लिए विभिन्न दिशाओं में स्थित बन्दरों को बुलाकर चारों तरफ भेज दिया।

**आंग्लम्**—Bringing together all the monkeys, the said Sugrīva (the jewel among the monkeys) too despatched them in all directions, keen as he was to have Sītā (the daughter of Janaka) traced out.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

वानरर्षभः – वानर + ऋषभः (गुण-सन्धिः)

दिदृक्षुर्जनकात्मजाम् – दिदृक्षुः + जनकात्मजाम् (विसर्ग-सन्धिः)

---

* चकारात् ऋक्षान् इति व्याख्यातारः

**(ख) समासः**

| | | |
|---|---|---|
| वानरर्षभः | – | वानरः ऋषभः इव = वानरर्षभः इति समीचीनम् । {पा.सू. 2.1.56. अत्र (सूत्रे) गणपाठे ऋषभः इति वर्तते । राक्षसः ऋषभः इव = राक्षासर्षभः इति समासकुसुमावलिः ।} |
| जनकात्मजाम् | – | जनकस्य आत्मजा जनकात्मजा (ष० तत्पु०) ताम् |

**(ग) कृदन्तौ**

| | | |
|---|---|---|
| समानीय | – | सम् + आ + नी + ल्यप् |
| दिदृक्षुः | – | (द्रष्टुम् इच्छुः) दृश् + सन् + उ |

(ii) **कोशः**

| | | |
|---|---|---|
| दिक् | – | दिशश्च ककुभः काष्ठा (अमरकोशः) |

---

## अभ्यासः – 48
### (श्लोकः 71)

1. **यथोचितं योजयत–**

[**उचित मेल बनाएं।** Match with the appropriate one.]

| | | | |
|---|---|---|---|
| (i) | दिशः | (क) | दृश् + सन् + उ |
| (ii) | सर्वान् | (ख) | सर्व- अ० सर्व० पुं० द्विती० बहु० |
| (iii) | सः | (ग) | तद्- द्० सर्व० द्विती० बहु० |
| (iv) | वानरर्षभः | (घ) | अ० पुं० प्र० एक० समस्तम् |
| (v) | जनकात्मजाम् | (ङ) | आ० स्त्री० द्विती० एक० समस्तम् |
| (vi) | दिदृक्षुः | (च) | शकारान्त (स्त्री०) द्विती० एक० |

2. **सन्धिविच्छेदं कुरुत–**

[**सन्धि विच्छेद करें।** Disjoin the sandhi.]

**यथा–** (क) वानरर्षभः = **वानर** + **ऋषभः**

(ख) नरर्षभः = +
(ग) राजर्षिः = +
(घ) महर्षिः = +
(ङ) सप्तर्षिः = +
(च) पुरुषर्षभः = +

3. **यथोदाहरणं रिक्तं स्थानं पूरयत–**

[**उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as per the example.]

यथा– (क) दिदृक्षुः = द्रष्टुम् इच्छुः (दृश्)
(ख) = (पठ्)
(ग) = (गम्)
(घ) = (कृ)
(ङ) = (ज्ञा)
(च) = (लिख्)

4. **श्लोकमाधृत्य उत्तरं लिखत–**

[**श्लोक के आधार पर उत्तर लिखें।** Answer on the basis of the verse.]

(क) श्लोके कर्ता कः ? ।
(ख) प्रधानक्रियां प्रति कर्म किम् ? ।
(ग) कर्मणः विशेषणानि कानि ? ..................... ।
(घ) मुख्यक्रिया कस्मिन् लकारे वर्तते ? ।
(ङ) 'समानीय' इत्यस्य कर्म किम् ? ।

5. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत–**

[**दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) दिश् (ख) दिदृक्षु (ग) आत्मज (घ) प्र + स्था + णिच् (लटि, लिटि, लृटि लङि च)

**श्लोकः**

**ततो गृध्रस्य वचनात् सम्पातेर्हनुमान् बली।**
**शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ 72 ॥**

**पदच्छेदः**

ततः गृध्रस्य वचनात् सम्पातेः हनुमान् बली।
शत-योजन-विस्तीर्णं पुप्लुवे लवणार्णवम् ॥ 72 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | अव्ययम् | शत-योजन-विस्तीर्णम् | अ० पुं० द्विती० एक० |
| गृध्रस्य | अ० पुं० ष० एक० | | समस्तम् |
| वचनात् | अ० नपुं० प० एक० | पुप्लुवे | प्लु- कर्तरि लिट् प्रपु० |
| सम्पातेः | इ० पुं० ष० एक० | | एक० समस्तम् |
| हनुमान् | हनुमत्- त्० पुं० प्र० एक० | लवणार्णवम् | अ० पुं० द्विती० एक० |
| बली | न्० पुं० प्र० एक० | | समस्तम् |

**आकाङ्क्षा**

**पुप्लुवे।**

| | |
|---|---|
| कः पुप्लुवे ? | हनुमान् पुप्लुवे। |
| कीदृशः हनुमान् पुप्लुवे ? | बली हनुमान् पुप्लुवे। |
| कुतः पुप्लुवे ? | गृध्रस्य वचनात् पुप्लुवे। |
| कस्य गृध्रस्य वचनात् पुप्लुवे ? | सम्पातेः गृध्रस्य वचनात् पुप्लुवे। |
| हनुमान् कम् पुप्लुवे ? | हनुमान् लवणार्णवं पुप्लुवे। |
| कीदृशं लवणार्णवम् पुप्लुवे ? | शतयोजनविस्तीर्णं लवणार्णवं पुप्लुवे। |

**अन्वयः**

ततः बली हनुमान् सम्पातेः गृध्रस्य वचनात् शतयोजनविस्तीर्णं लवणार्णवं पुप्लवे।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | अनन्तरम् | उसके बाद | Thereafter |
| बली | बलवान् | बलवान् | mighty |
| हनुमान् | हनुमान् | हनुमान् | Hanumān |
| सम्पातेः | सम्पाति-नामकस्य | सम्पाति नाम के | Sampāti by name |
| गृध्रस्य | गृध्रस्य | गिद्ध पक्षी के | vulture |
| वचनात् | कथनात् | कथन से | according to the counsel |
| शत-योजन-विस्तीर्णम् | चतुःशतक्रोशविस्तृतम् | सौ योजन* विस्तृत (चार सौ कोस) | 800 miles broad |
| लवणार्णवम् | क्षारसमुद्रम् | खारा सागर को | brackish sea |
| पुप्लुवे | उल्लङ्घितवान् | पार किया | leapt across |

**भावार्थः**

**संस्कृतम्**— परमबलशाली हनुमान् सम्पातिनामकस्य गृध्रस्य 'तस्यां वसति वैदेही दीना कौशेयवासिनी' इत्यादिवचनमनुसृत्य चतुःशतक्रोशपरिमितं क्षारसागरम् उल्लङ्घितवान्।

**हिन्दी**— इस प्रकार सुग्रीव के आदेश के बाद परम बलशाली हनुमान् ने सम्पाति नामक गिद्ध के वचनानुसार चार सौ कोस विस्तृत खारे सागर को पार कर दिया।

**आंग्लम्**— Then, according to the counsel of Sampāti, the vulture king (who could see Sītā in Lankā from that distance), the mighty Hanumān leapt across the brackish sea, eight hundred miles broad (that parted the main land of India from Lankā).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

सम्पातेर्हनुमान् – सम्पातेः + हनुमान् (विसर्ग-सन्धिः)

---

* *एक योजन = चार कोस*

लवणार्णवम् – लवण + अर्णवम् (दीर्घ-सन्धिः)

ततो गृध्रस्य – ततः + गृध्रस्य (विसर्ग-सन्धिः)

**(ख) समासः**

शतयोजनविस्तीर्णम् – शतानां योजनानां समाहारः शतयोजनम् (द्विगुः)
शतयोजनं विस्तीर्णः शतयोजनविस्तीर्णः

लवणार्णवम् – लवण. च असौ अर्णवः लवणार्णवः (कर्मधारयः) तम्

**(ग) तद्धितान्तौ**

हनुमान् – हनु + मतुप्

बली – बल + इनि

**(ii) पर्यायवाचिनः शब्दाः**

अर्णवः – उदधिः, सागरः, सिन्धुः, पयोधिः, रत्नाकरः

---

## अभ्यासः - 49

### (श्लोकः 72)

1. **मञ्जूषातः पदानि गृहीत्वा वाक्यानि रचयत–**

[**मञ्जूषा से पदों को लेकर वाक्य रचना करें।** Make sentence with the words given in the boxe.]

| | | | | |
|---|---|---|---|---|
| गृध्रस्य<br>दशरथस्य<br>रामस्य<br>सुग्रीवस्य | वचनात् | हनुमान्<br>रामः | लवणार्णवं<br>वनं<br>वालिनम्<br>द्रोणगिरिं | पुप्लुवे<br>जघान<br>जगाम |

**यथा–** (क) **गृध्रस्य वचनात् हनुमान् लवणार्णवं पुप्लुवे** ।

(ख) ............ ।

(ग) ............ ।

(घ) ............ ।

**2. विशेषणपदस्य यथोचितं रूपं लिखत–**

[ **विशेषणपद का यथोचित रूप लिखें।** Write the appropriate form of the qualifier as shown in the exampie.]

यथा– (क) महाबलिन् = ....**महाबली**.... हनुमान् ।

(ख) धनिन् = वणिजः ।

(ग) मानिन् = विद्वांसः ।

(घ) मेधाविन् = छात्रः ।

(ङ) गुणिन् = पुरुषौ ।

**3. यथोचितं योजयत–**

[ **उचित मेल बनाएं।** Match with the appropriate one.]

| | | | |
|---|---|---|---|
| यथा– (i) | लवणार्णवः | (क) | वृद्धि-सन्धिः |
| (ii) | ततो गृध्रः | (ख) | दीर्घ-सन्धिः |
| (iii) | यदत्र | (ग) | विसर्ग-सन्धिः |
| (iv) | यद्यत्र | (घ) | जश्त्व-सन्धिः |
| (v) | तथैव | (ङ) | यण्-सन्धिः |

**4. समानार्थकं पदं लिखत–**

[ **समानार्थक पद लिखें।** Write the synonym.]

यथा– (क) पुप्लुवे = ....**उल्ललङ्घे**....

(ख) लवणार्णवम् =

(ग) क्षीरार्णवम् =

(घ) गृध्रस्य =

(ङ) विस्तीर्णम् =

(च) दिशः =

(छ) बली =

(ज) वचनात् =

**श्लोकः**

**तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।**
**ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ 73 ॥**

**पदच्छेदः**

तत्र लङ्काम् समासाद्य पुरीम् रावण-पालिताम् ।
ददर्श सीताम् ध्यायन्तीम् अशोक-वनिकाम् गताम् ॥ 73 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| तत्र | तद्धितान्तम् अव्ययम् | सीताम् | आ० स्त्री० द्विती० एक० |
| लङ्काम् | आ० स्त्री० द्विती० एक० | ध्यायन्तीम् | ई० स्त्री० द्विती० एक० विशेषणम् |
| समासाद्य | ल्यबन्तम् अव्ययम् | | |
| पुरीम् | ई० स्त्री० द्विती० एक० | अशोकवनिकाम् | आ० स्त्री० द्विती० एक० समस्तम् |
| रावण-पालिताम् | आ० स्त्री० द्विती० एक० समस्तम् | गताम् | आ० स्त्री० द्विती० एक० |
| ददर्श | दृश्- कर्तरि लिट् प्रपु० एक० | | |

**आकाङ्क्षा**

**ददर्श।**

| | |
|---|---|
| कां ददर्श ? | सीतां ददर्श। |
| किं कुर्वन्तीं सीतां ददर्श ? | ध्यायन्तीं सीतां ददर्श। |
| कुत्र गतां सीतां ददर्श ? | अशोकवनिकां गतां सीतां ददर्श। |
| कां समासाद्य सीतां ददर्श ? | पुरीं समासाद्य सीतां ददर्श। |
| कां पुरीं समासाद्य सीतां ददर्श ? | लङ्कां पुरीं समासाद्य सीतां ददर्श। |
| कीदृशीं लङ्कां पुरीं समासाद्य ददर्श ? | रावणपालितां लङ्कां पुरीं समासाद्य ददर्श। |

**अन्वयः**

(हनुमान्) रावणपालितां लङ्कां पुरीं समासाद्य तत्र अशोकवनिकां गतां (रामं) ध्यायन्तीं सीतां ददर्श।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| रावणपालिताम् | रावणेन पोषिताम् | रावण द्वारा पालित | ruled over by Rāvaṇa |
| लङ्कां पुरीम् | लङ्का-नाम्नीं नगरीं | लङ्का नामक नगरी | city named Lankā |
| समासाद्य | सम्प्राप्य | पहुँच कर | having reached |
| तत्र | लङ्कायाम् | वहाँ (लङ्का में) | there (in Lankā) |
| अशोकवनिकाम् | अशोक-वाटिकाम् | अशोक वाटिका में | in the Ashok grove |
| गताम् | स्थिताम् | स्थित | confined |
| ध्यायन्तीम् | स्मरन्तीम् | स्मरण करती हुई | contemplating (Rāma) |
| सीताम् | जानकीम् | सीता को | Sītā |
| ददर्श | दृष्टवान् | देखा | saw |

**भावार्थः**

**संस्कृतम्**— हनुमान् रावणेन रक्षितां लङ्का-नाम्नीं नगरीं गत्वा तत्र अशोकवाटिकायां रामं स्मरन्तीं सीतां दृष्टवान्।

**हिन्दी**— हनुमान् रावण द्वारा पालित लङ्का में जाकर वहाँ अशोकवाटिका में राम का ध्यान करती हुई सीता को देखा।

**आंग्लम्**— Duly reaching the city of Lankā, ruled over by (the demon king) Rāvana, he found there Sītā confined in a grove of Aśoka trees, contemplating (on the feet of Śri Rāma).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) समासः**

रावणपालिताम् – रावणेन पालिता रावणपालिता (तृ० तत्पु०) ताम्

अशोकवनिकाम् – अशोकानां वनिका अशोकवनिका (ष० तत्पु०) ताम्

**(ख) कृदन्ताः**

समासाद्य – सम् + आ + सद् + ल्यप्

पालिताम् – पाल् + क्त + टाप् = पालिता
ध्यायन्तीम् – ध्यै + शतृ + ङीप् = ध्यायन्ती
गताम् – गम् + क्त + टाप् = गता

(ii) **पर्यायवाचिनः शब्दाः**
पुरी – पूः, नगरी, नगरम्, पुरम्

---

## अभ्यासः - 50
### (श्लोकः 73)

1. **पठित-श्लोकस्य पदच्छेदं कुरुत–**
[**पठित श्लोक का पदच्छेद करें।** Split the words of the present verse.]

2. **कोष्ठके प्रदत्तैः पदैः वाक्यानि रचयत–**
[**कोष्ठक में प्रदत्त पदों से वाक्य बनाएं।** Make sentence with the words given in the box.]

| | | | |
|---|---|---|---|
| पिता | छात्रान् | चौरं | लिखितवान् |
| अध्यापकः | पुत्राय | पत्रं | पाठितवान् |
| छात्रः | मार्गे | गणितं | दृष्टवान् |
| आरक्षी | मनोयोगपूर्वकम् | संस्कृतं | पठितवान् |

**यथा–** (क) **पिता पुत्राय पत्रं लिखितवान्** ।

(ख) ............................................................ ।

(ग) ............................................................ ।

(घ) ............................................................ ।

3. **समस्तपदानां विग्रहं लिखत--**

[ **समस्तपदों का विग्रह लिखें।** Write the analytical sentence of the compound.]

यथा– (क) रावणपालिताम् = **रावणेन पालिता रावणपालिता ताम्**

(ख) बालयुक्तम् =

(ग) मातृपोषितम् =

(घ) अशोकवनिका = **अशोकानां वनिका**

(ङ) पुष्पवाटिका =

(च) छात्रावासः =

(छ) अनाथालयः =

(ज) पत्रालयः =

4. **उत्तरं लिखत–**

[ **उत्तर लिखें।** Answer the questions.]

(क) श्लोके "पुरीम्" इत्यस्य विशेषणे के ? ............ ।

(ख) "सीताम्" इत्यस्य के विशेषणे ? ............ ।

(ग) 'समासाद्य' इत्यस्य कर्मपदं किम् ? ............ ।

(घ) ददर्श इति क्रियापदस्य कर्मपदं किम् ? ।

(ङ) श्लोके क्त-प्रत्ययान्तौ शब्दौ कौ ? ।

5. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) समासाद्य (ख) पालित (ग) ध्यै (लटि, लृटि लङि च)

**श्लोकः**

**निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य च।**
**समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ 74 ॥**

**पदच्छेदः**

नि-वेदयित्वा अभि-ज्ञानम् प्रवृत्तिम् वि-नि-वेद्य च।
समाश्वास्य च वैदेहीम् मर्दयामास तोरणम् ॥ 74 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| निवेदयित्वा | क्त्वान्तम् अव्ययपदम् | समाश्वास्य | ल्यबन्तम् अव्ययम् |
| अभिज्ञानम् | अ० नपुं० द्विती० एक० | वैदेहीम् | ई० स्त्री० द्विती० एक० |
| प्रवृत्तिम् | इ० स्त्री० द्विती० एक० | मर्दयामास | मर्द+णिच्- कर्तरि लिट् |
| विनिवेद्य | ल्यबन्तम् अव्ययम् | | प्रपु० एक० |
| च | अव्ययम् | तोरणम् | अ० नपुं० द्विती० एक० |

**आकाङ्क्षा**

**(हनुमान्) मर्दयामास।**

| | |
|---|---|
| हनुमान् किं मर्दयामास ? | हनुमान् तोरणं मर्दयामास। |
| सः किं कृत्वा तोरणं मर्दयामास ? | सः निवेदयित्वा* (निवेद्य) तोरणं मर्दयामास। |
| किं निवेद्य मर्दयामास ? | अभिज्ञानं निवेदयित्वा (निवेद्य) मर्दयामास। |
| पुनः किं कृत्वा मर्दयामास ? | विनिवेद्य मर्दयामास। |
| किं विनिवेद्य ? | प्रवृत्तिं विनिवेद्य। |
| पुनश्च किं कृत्वा मर्दयामास ? | समाश्वास्य मर्दयामास। |
| कां समाश्वास्य ? | वैदेहीं समाश्वास्य मर्दयामास। |

**अन्वयः**

(ततश्च हनुमान्) अभिज्ञानं निवेदयित्वा* प्रवृत्तिं च (रामस्य) विनिवेद्य वैदेहीं समाश्वास्य च तोरणं मर्दयामास।

---

* *आर्षप्रयोगः*

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| अभिज्ञानम् | परिचायकं वस्तु | परिचायक वस्तु | the souvenir |
| निवेदयित्वा | समर्प्य | समर्पित कर | having presented |
| प्रवृत्तिम् | वृत्तम् | घटनाओं को | incidents |
| विनिवेद्य | निवेद्य | बतलाकर | having described |
| वैदेहीम् | सीताम् | सीता को | Sītā |
| समाश्वास्य | आश्वास्य | आश्वस्त कर | having consoled |
| च | च | और | and |
| तोरणम् | अशोकवनिकाद्वारम् | अशोक वाटिका के प्रवेश द्वार को | outer gate of Ashoka garden |
| मर्दयामास | अध्वंसत | ध्वस्त कर दिया | demolished |

**भावार्थः**

**संस्कृतम्**— तदनन्तरं हनुमान् रामस्य परिचायकं वस्तु अंगुलीयकं सीतायै समर्प्य सीताहरणानन्तरं रामसुग्रीवयोः मैत्रीपर्यन्तं जातं वृत्तं ज्ञापितवान्। तदनन्तरं सीतैकवेद्यं रामस्य अङ्गचिह्नं बोधयित्वा रामः शीघ्रम् आगन्ता इति च उक्त्वा सीतां समाश्वास्य प्रतिगमनकाले हनुमान् अशोकवनिकायाः प्रवेशद्वारम् अध्वंसत।

**हिन्दी**— उसके बाद हनुमान् राम की परिचायक अंगूठी सीता को देकर सीताहरण के बाद राम सुग्रीव की मैत्री पर्यन्त का सारा वृत्तान्त सुनाया। फिर केवल सीता को ही जो पता हो ऐसे राम के अंग के चिह्न के बारे में बताया एवं 'शीघ्र ही राम आने वाले हैं' ऐसा कहकर सीता को आश्वस्त कर अशोक वाटिका एवं उसके प्रवेशद्वार को ध्वस्त कर दिया।

**आंग्लम्**— Presenting (to her) the souvenir (in the shape of a signet ring handed over to him by Śrī Rāma) and relating the news (about Śrī Rāma's alliance with Sugrīva and the latter's installation on the throne of Kiṣkindhā after Vālī, his elder brother and mortal enemy, had been got rid of by Śrī Rāma) and having consoled the daughter of King Janaka (with the assurance that her consort would shortly come and rescue her after disposing of the tyrannical Rāvaṇa), Hanumān demolished the outer gate of the orchard.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **कृदन्ताः**

| | | |
|---|---|---|
| निवेदयित्वा* | – | नि + विद् + क्त्वा |
| विनिवेद्य | – | वि + नि + विद् + ल्यप् |
| समाश्वास्य | – | सम + आ + श्वस् + ल्यप् |
| प्रवृत्तिम् | – | प्र + वृत् + क्तिन् |

(ii) **कोशः**

| | | |
|---|---|---|
| तोरणः | – | तोरणोऽस्त्री बहिर्द्वारम् (अमरकोशः) |
| प्रवृत्तिः | – | वार्ता प्रवृत्तिर्वृत्तान्तः (अमरकोशः) |

### अभ्यासः - 51
### (श्लोकः 74)

1. **श्लोकस्थ-स्त्रीलिङ्ग-पदानां विश्लेषणं कुरुत–**
[**श्लोकस्थ स्त्रीलिङ्ग पदों का विश्लेषण करें।** Write the analysis of the feminine words in the verse.]

2. **प्रकृतिं प्रत्ययं च पृथक्कुरुत–**
[**प्रकृति-प्रत्यय का विश्लेषण करें।** Split the base and the suffix.]

**यथा–** (क) विनिवेद्य = **वि-नि-विद् + ल्यप्**

(ख) समाश्वास्य =

(ग) अभिगम्य =

(घ) निहत्य =

(ङ) संसेव्य =

* *आर्षः प्रयोगः*

3. **यथोदाहरणम् एकपदं लिखत–**

[**उदाहरण के अनुसार एक पद लिखें।** Write one word as shown in the example.]

यथा– (क) विदेहस्य अपत्यं स्त्री = **वैदेही**

(ख) मैथिलस्य अपत्यं स्त्री =

(ग) विदर्भस्य अपत्यं स्त्री =

(घ) भीमस्य अपत्यं स्त्री =

(ङ) हिमवतः अपत्यं स्त्री =

4. **अर्थ लिखत–**

[**अर्थ लिखें।** Write the meaning.]

यथा– (क) मर्दयामास = **मर्दितवान्**

(ख) स्थापयामास =

(ग) कारयामास =

(घ) रचयामास =

(ङ) पोषयामास =

(च) तोषयामास =

5. **पठितं श्लोकं पूरयत–**

[**पठित श्लोक की पूर्ति करें।** Complete the present verse.]

निवेदयित्वा ............ प्रवृत्तिं ............ ।

............ च वैदेहीं ............ तोरणम् ॥

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**

[**दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) अभिज्ञान (ख) प्रवृत्ति (ग) तोरण (घ) मर्द् (लटि, लिटि लङि च)

**श्लोकः**

**पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि ।**
**शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ 75 ॥**

**पदच्छेदः**

पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रि–सुतान् अपि ।
शूरम् अक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ 75 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| पञ्च | पञ्चन्- न्० पुं० द्विती० बहु० | अपि | अव्ययम् |
| | | शूरम् | अ० पुं० द्विती० एक० |
| सेनाग्रगान् | अ० पुं० द्विती० बहु० समस्तम् | अक्षम् | अ० पुं० द्विती० एक० |
| | | च | अव्ययम् |
| हत्वा | क्त्वान्तम् अव्ययम् | निष्पिष्य | ल्यबन्तम् अव्ययम् |
| सप्त | सप्तन्- न्० पुं० द्विती० बहु० | ग्रहणम् | अ० नपुं० द्विती० एक० |
| | | समुपागमत् | सम+उप+गम् कर्तरि लुङ् प्रपु० एक० |
| मन्त्रि-सुतान् | अ० पुं० द्विती० बहु० समस्तम् | | |

**आकाङ्क्षा**

**(सः हनुमान्) समुपागमत् ।**

| | |
|---|---|
| हनुमान् किं समुपागमत् ? | हनुमान् ग्रहणं समुपागमत् । |
| सः किं कृत्वा ग्रहणं समुपागमत् ? | सः हत्वा ग्रहणं समुपागमत् । |
| सः कान् हत्वा ग्रहणं समुपागमत् ? | सः सेनाग्रगान् हत्वा ग्रहणं समुपागमत् । |
| कति सेनाग्रगान् हत्वा ? | पञ्च सेनाग्रगान् हत्वा । |
| पुनश्च कान् हत्वा ? | मन्त्रिसुतान् हत्वा । |
| कति मन्त्रिसुतान् हत्वा ? | सप्त मन्त्रिसुतान् हत्वा । |
| पुनश्च किं कृत्वा ग्रहणं समुपागमत् ? | निष्पिष्य ग्रहणं समुपागमत् । |
| कं निष्पिष्य ? | अक्षं निष्पिष्य । |
| कीदृशम् अक्षं निष्पिष्य ? | शूरम् अक्षं निष्पिष्य । |

**अन्वयः**

(सः हनुमान्) पञ्च सेनाग्रगान् सप्त मन्त्रिसुतान् च हत्वा शूरम् अक्षम् अपि निष्पिष्य ग्रहणं समुपागमत् ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| पञ्च | पञ्च-संख्याकान् | पाँच | five |
| सेनाग्रगान् | सेनापतीन् | सेनापतियों को | army commanders |
| सप्त | सप्त-संख्याकान् | सात | seven |
| मन्त्रिसुतान् | मन्त्रिणां पुत्रान् | मंत्रियों के पुत्रों को | sons of ministers |
| च | च | और | and |
| हत्वा | मारयित्वा | मारकर | having killed |
| शूरम् अक्षम् | शौर्यगुणयुक्तम् अक्षमपि | शौर्यगुणयुक्त अक्ष | |
| अपि | | को भी | gallant Akṣa |
| निष्पिष्य | चूर्णीकृत्य | चूर्ण करके | having crushed |
| ग्रहणम् | ब्रह्मास्त्रबन्धनम् | ब्रह्मास्त्र बन्धन में | to be bound |
| समुपागमत् | प्राप्तः | पहुँच गया | allowed himself |

**भावार्थः**

**संस्कृतम्**– ततः परं हनुमान् पञ्च सेनापतीन् (पिङ्गलनेत्रादिनामकान्) सप्त मन्त्रिपुत्रान् (जाम्बुमाल्यादीन्) हत्वा वीरम् अपि रावणपुत्रम् अक्षकुमारं चूर्णीकृत्य मेघनादप्रयुक्तेन ब्रह्मास्त्रेण बद्धः जातः ।

**हिन्दी**– तत्पश्चात् हनुमान् पाँच सेनापतियों को एवं सात मन्त्री-पुत्रों को मारकर रावण के वीर पुत्र अक्षय कुमार को चूर-चूर कर मेघनाद द्वारा चलाए गए ब्रह्मास्त्र में आबद्ध हो गए।।

**आंग्लम्**– Having made short work of five army-commanders (Piṅgalanetra and others) as also seven sons of ministers (Jambumālī and so on), and crushed the gallant Akṣa (a son of Rāvana), he allowed himself to be bound (under the spell of a Brahmāstra or missile presided over by Brahmā, the creator, and discharged by Rāvaṇa's heir-apparent Meghanāda).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

सेनाग्रगान् – सेना + अग्रगान् (दीर्घ-सन्धिः)

समुपागमत् – सम् + उप + अगमत् (दीर्घ-सन्धिः)

**(ख) समासः**

अग्रगाः – अग्रे गच्छन्ति इति अग्रगाः (उपपद-तत्पु०)

सेनाग्रगान् – सेनायाः अग्रगाः सेनाग्रगाः (ष० तत्पु०) तान्

मन्त्रिसुतान् – मन्त्रिणः सुताः मन्त्रिसुताः (ष० तत्पु०) तान्

---

### अभ्यासः – 52
### (श्लोकः 75)

1. **पठितस्य श्लोकस्य पदच्छेदं कुरुत–**

[ **पठित श्लोक का पदच्छेद करें।** Split the words of the present verse.]

।

।।

2. **निर्देशानुसारं पूर्णं पदं लिखत–**

[ **निर्देश के अनुसार पूरा पद लिखें।** Write the complete word.]

**यथा–** (क) नकारान्त-नित्य-बहुवचनान्त-शब्दौ = **पञ्च, सप्त**

(ख) अ० पुं० द्विती० एक० (विशेषणम्) =

(ग) ल्यबन्तम् अव्ययपदम् =

(घ) अ० पुं० द्विती० बहु० (समस्तपदद्वयम्) =

(ङ) क्त्वान्तम् अव्ययम् =

3. **श्लोकं पठित्वा उत्तरं लिखत–**

[ **श्लोक पढ़कर उत्तर लिखें।** Write the answer from the verse.]

(क) हनुमान् कति सेनाग्रगान् हतवान् ? ...................... ।

(ख) सेनाग्रगान् हत्वा हनुमान् कान् हतवान् ? ...................... ।

(ग) हनुमान् कति मन्त्रिसुतान् हतवान् ? ...................... ।

(घ) हनुमान् कं निष्पिष्टवान् ? ...................... ।

(ङ) अन्ते च हनुमान् किं समुपागमत् ? ...................... ।

4. **मञ्जूषातः विशेषणानि प्रयुज्य रिक्तस्थानं पूरयत—**

[**मञ्जूषा से विशेषण पदों का प्रयोग कर रिक्तस्थान भरें।** Fill in the blanks with the qualifiers given in the box.]

**सुन्दरी, वीरः, मेधावी, विशालम्, सुन्दरम्**

**यथा—** (क) ......**वीरः**...... पुत्रः ।

(ख) ...................... छात्रः ।

(ग) ...................... बालिका ।

(घ) ...................... वनम् ।

(ङ) ...................... नगरम् ।

5. **यथोदाहरणं क्रियारूपं कृदन्तरूपं च लिखत—**

[**उदाहरण के अनुसार क्रियारूप और कृदन्त रूप लिखें।** Write verbal forms and *Kṛdanta* forms as shown in the example.]

| | | | | | | |
|---|---|---|---|---|---|---|
| **यथा—** (क) | ददर्श | **पश्यति** | **अपश्यत्** | **पश्यतु** | **द्रक्ष्यति** | **दृष्ट्वा** |
| (ख) | चखाद | | अखादत् | | | |
| (ग) | पपात | | | पततु | | |
| (घ) | पपाठ | | | | | पठित्वा |
| (ङ) | समुपाजगाम | | समुपागमत् | | | |
| (च) | कथयामास | | | | कथयिष्यति | |
| (छ) | चुकूज | कूजति | | | | |
| (ज) | लिलेख | | | | | लिखित्वा |
| (झ) | दधाव | | अधावत् | | | |

**श्लोकः**

**अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् ।**
**मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया ॥ 76 ॥**

**पदच्छेदः**

अस्त्रेण उन्मुक्तम् आत्मानम् ज्ञात्वा पैतामहात् वरात् ।
मर्षयन् राक्षसान् वीरः यन्त्रिणः तान् यदृच्छया ॥ 76 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| अस्त्रेण | अ० नपुं० तृ० एक० | राक्षसान् | अ० पुं० द्विती० बहु० |
| उन्मुक्तम् | अ० पुं० द्विती० एक० | वीरः | अ० पुं० प्र० एक० |
| आत्मानम् | न्० पुं० द्विती० एक० | यन्त्रिणः | न्० पुं० द्विती० बहु० |
| ज्ञात्वा | क्त्वान्तम् अव्ययम् | तान् | तद्- द्० सर्व० पुं० द्विती० बहु० |
| पैतामहात् | अ० पुं० प० एक० | | |
| वरात् | अ० पुं० प० एक० | यदृच्छया | आ० स्त्री० तृ० एक० |
| मर्षयन् | त्० पुं० प्र० एक० | | |

**आकाङ्क्षा**

**(बन्धनात् परं हनुमान् रावणं प्राप्तवान्)**

| | |
|---|---|
| वीरः (हनुमान्) किं कुर्वन् (प्राप्तवान्) ? | मर्षयन् । |
| कान् मर्षयन् ? | तान् राक्षसान् । |
| कीदृशान् तान् ? | यन्त्रिणः । |
| कथं मर्षयन् (प्राप्तवान्) ? | यदृच्छया । |
| किं ज्ञात्वा ? | आत्मानम् उन्मुक्तं ज्ञात्वा । |
| कस्मात् कारणाद् उन्मुक्तं ज्ञात्वा (प्राप्तवान्) ? | पैतामहाद् वरात् । |

**अन्वयः**

(बन्धनानन्तरं हनुमान्) पैतामहात् वरात् अस्त्रेण आत्मानम् उन्मुक्तं ज्ञात्वा यन्त्रिणः तान् राक्षसान् यदृच्छया मर्षयन् (रावणं प्राप्तवान्)

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| वीरः | शूरः | वीर | the hero (Hanumān) |
| पैतामहात् | ब्रह्मणः | ब्रह्मा से प्राप्त | receieved from *Pitāmaha* Brahmā |
| वरात् | अनुग्रहात् | वरदान के कारण | in consequence of boon by the missils |
| अस्त्रेण | ब्रह्मास्त्रेण | ब्रह्मास्त्र से | by *Brahmāstra* |
| उन्मुक्तम् | मुक्तम् | मुक्त | released |
| आत्मानम् | स्वम् | अपने को | himself |
| ज्ञात्वा | बुद्ध्वा | जानकर | having known |
| यन्त्रिणः | बन्धनकर्तॄन् | बांधकर ले जानेवाले | who can bind him in bondage |
| तान् | तान् | उनको | those |
| राक्षसान् | असुरान् | राक्षसों को | demons |
| यदृच्छया | स्वेच्छया | अपनी इच्छा से | deliberately |
| मर्षयन् | सहन् | सहन करते हुए | bearing with |

**भावार्थः**

**संस्कृतम्**– मेघनादप्रयुक्तेन ब्रह्मास्त्रेण बद्धः हनुमान् पितामहस्य वरप्रसादात् आत्मानं बन्धनमुक्तं ज्ञात्वा अपि स्वेच्छया बन्धनकर्तॄणां राक्षसानाम् आयासान् सहमानः रावणं प्राप्तवान्।

**हिन्दी**– मेघनाद द्वारा प्रयुक्त ब्रह्मास्त्र में बद्ध हनुमान् पितामह ब्रह्मा द्वारा प्राप्त वरदान के कारण अपने आप को बन्धनमुक्त जानते हुए भी चुपचाप स्वेच्छा से उन राक्षसों को सहते हुए (अपने को बन्धन में ही समझते हुए) रावण के पास पहुँचे।

**आंग्लम्**– Though knowing himself as released by the (aforesaid) missile in consequence of a boon granted by Brahmā (to the effect that after undergoing bondage for about a couple of hours, the missile associated with his name being infallible, he would be rid of it) the hero (Hanumān, who was keen to meet Rāvaṇa) deliberately bore with those ogres who carried him in bondage (to Rāvaṇa).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

अस्त्रेणोन्मुक्तम् - अस्त्रेण + उन्मुक्तम् (गुण-सन्धिः)
पैतामहाद् वरात् - पैतामहात् + वरात् (जश्त्व-सन्धिः)
यन्त्रिणस्तान् - यन्त्रिणः + तान् (विसर्ग-सन्धिः)
उन्मुक्तम् - उद् + मुक्तम् (अनुनासिक-सन्धिः)

**(ख) कृदन्ताः**

उन्मुक्तम् - उद् + मुच् + क्त
ज्ञात्वा - ज्ञा + क्त्वा
मर्षयन् - मर्ष + णिच् + शतृ = मर्षयत्

**(ग) तद्धितान्तः**

पैतामहात् - पितामह + अण् (पितामहस्य अयं पैतामहः) तस्मात्

---

### अभ्यासः - 53
### (श्लोकः 76)

1. **यथान्वयं रिक्तस्थानं पूरयत—**
**[अन्वय के अनुसार रिक्त स्थान भरें।** Fill in the blanks as per the construation of the verse.]

(.............................................. ..............................) पैतामहात् अस्त्रेण
ज्ञात्वा तान् यदृच्छया..................(....................... ..........................)।

2. **सत्यम् ✔ असत्यं × वा लिखत—**
**[सत्य ✔ या असत्य × लिखें।** Write true ✔ or false ×.]

(क) हनुमान् स्वप्रयासेन बन्धनमुक्तः जातः। ☐
(ख) हनुमान् पितामहदत्तेन वरेण बन्धनमुक्तः जातः। ☐
(ग) हनुमान् राक्षसान् ममर्ष। ☐
(घ) हनुमान् रावणपुरं प्राप्तवान्। ☐
(ङ) हनुमान् राक्षसेभ्यः कुपितवान्। ☐

3. **यथोदाहरणं पूरयत—**
[**उदाहरण के अनुसार पूरा करें।** Complete as shown in the example.]

**यथा—** (क) मर्षयन् = **मृष् + णिच् + शतृ**
(ख) कर्षयन् =
(ग) घर्षयन् =
(घ) तोषयन् =
(ङ) पोषयन् =

4. **यथोदाहरणं रिक्तं पूरयत—**
[**उदाहरण के अनुसार रिक्तस्थान पूर्ण करें।** Fill in the blanks as shown in the example.]

**यथा—** (क) पैतामहम् = **पितामहस्य इदम्**
(ख) ऐन्द्रम् =
(ग) पाशुपतम् =
(घ) शैवम् =
(ङ) वैष्णवम् =
(च) गान्धर्वम् =

5. **यथोचितं योजयत—**
[**सही मेल बनाएं।** Match appropriately.]

| **यथा—** | | | | |
|---|---|---|---|---|
| (i) | मर्षयति | — | (क) | तद्धितान्तः |
| (ii) | महावीरः | | (ख) | कृदन्तः |
| (iii) | अस्त्रेण | | (ग) | तिङन्तम् |
| (iv) | एव | | (घ) | असमस्तं सुबन्तम् |
| (v) | पैतामह | | (ङ) | अव्ययम् |
| (vi) | उन्मुक्त | | (च) | समस्तं सुबन्तम् |

(उदाहरण: (i) मर्षयति — (ग) तिङन्तम्)

**श्लोकः**

**ततो दग्ध्वा पुरीं लङ्काम् ऋते सीतां च मैथिलीम् ।**
**रामाय प्रियमाख्यातुं पुनरायात् महाकपिः ॥ 77 ॥**

**पदच्छेदः**

ततः दग्ध्वा पुरीं लङ्काम् ऋते सीतां च मैथिलीम् ।
रामाय प्रियम् आख्यातुम् पुनः आयात् महा-कपिः ॥ 77 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| ततः | अव्ययम् | रामाय | अ० पुं० च० एक० |
| दग्ध्वा | क्त्वान्तम् अव्ययम् | प्रियम् | अ० नपुं० द्विती० एक० |
| पुरीम् | ई० स्त्री० द्विती० एक० | आख्यातुम् | तुमुन्नन्तम् अव्ययम् |
| लङ्काम् | आ० स्त्री० द्विती० एक० | पुनः | अव्ययम् |
| ऋते | अव्ययम् | आयात् | आ + या- कर्तरि लङ् |
| सीताम् | आ० स्त्री० द्विती० एक० | | प्रपु० एक० |
| च | अव्ययम् | महाकपिः | इ० पुं० प्र० एक० |
| मैथिलीम् | ई० स्त्री० द्विती० एक० | | समस्तम् |

**आकाङ्क्षाः**

**पुनः आयात् ।**

कः पुनः आयात् ? — महाकपिः पुनरायात् ।
सः किं कृत्वा पुनः आयात् ? — महाकपिः दग्ध्वा पुनरायात् ।
सः किं दग्ध्वा पुनः आयात् ? — सः पुरीं दग्ध्वा पुनरायात् ।
सः कां पुरीं दग्ध्वा पुनः आयात् ? — महाकपिः लङ्कां पुरीं दग्ध्वा पुनरायात् ।
महाकपिः काम् (कस्याः) ऋते लङ्कां दग्धवान् ? — सः सीताम्* (सीतायाः) ऋते लङ्कां दग्धवान् ।
कीदृशीं सीताम् ऋते ? — मैथिलीं सीताम् ऋते ।
महाकपिः किं कर्तुं पुनः आयात् ? — महाकपिः आख्यातुं पुनरायात् ।
सः किम् आख्यातुं पुनः आयात् ? — प्रियम् आख्यातुं पुनरायात् ।
सः कस्मै प्रियमाख्यातुं पुनः आयात् ? — सः रामाय प्रियमाख्यातुं पुनरायात् ।

---

* *द्वितीया-प्रयोगः आर्षः*

**अन्वयः**

ततः महाकपिः मैथिलीं सीताम् ऋते लङ्कां पुरीं दग्ध्वा रामाय प्रियमाख्यातुं पुनः आयात्।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| ततः | तस्मात् स्थानात् | वहाँ से | from there |
| महाकपिः | महान् कपिः (हनुमान्) | वानर श्रेष्ठ (हनुमान्) | the great monkey (Hanumān) |
| मैथिलीम् | जनकात्मजाम् | मिथिला नरेश की पुत्री | to the princess of Mithilā |
| सीताम् | जानकीम् | सीता को | Sītā |
| ऋते | विहाय | छोड़कर | leaving |
| लङ्काम् | लङ्का-नाम्नीम् | लङ्का नामक | to the Lankā by name |
| पुरीम् | नगरीम् | नगरी को | the city |
| दग्ध्वा | ज्वालयित्वा | जलाकर | having set on fire |
| रामाय | रामचन्द्राय | राम को | to Rāma |
| प्रियम् | सुखकरम् | प्रिय | delightful |
| आख्यातुम् | कथयितुम् | कहने के लिए | to say |
| पुनः आयात् | पुनः अगच्छत् | लौट आया | returned back again |

**भावार्थः**

**संस्कृतम्**— मिथिलाराजपुत्रीं सीतां विहाय तस्याः निवासस्थानं च विहाय सर्वामपि लङ्कानगरीं दग्ध्वा रामाय सीतादर्शनरूपम् अन्यत् च प्रियं वृत्तान्तं कथयितुम् रामस्य सकाशे प्रत्यागच्छत्।

**हिन्दी**— रावणदर्शन के बाद वहाँ से निकलकर महाकपि हनुमान् मिथिलानरेश की पुत्री सीता को तथा उसके स्थान मात्र को छोड़कर बाकी लङ्का नगरी को जलाकर श्री राम को प्रिय लगने वाले सीतादर्शन तथा अन्य वृत्तान्त सुनाने के लिए लौट आए।

**आंग्लम्**— Having set on fire the city of Lankā barring (the abode of) Sītā, the princess of Mithilā, alone, the great monkey (Hanumān) then came back (by the same route to Kiṣkindhā) to break the delightful news (of Sītā having been found) to Śrī Rāma.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

ततो दग्ध्वा – ततः + दग्ध्वा (विसर्ग-सन्धिः)

पुनरायात् – पुनः + आयात् (विसर्ग-सन्धिः)

**(ख) समासः**

महाकपिः – महान् च असौ कपिः (कर्मधारयः)

**(ग) कृदन्तौ**

दग्ध्वा – दह् + क्त्वा

आख्यातुम् – आ + ख्या + तुमुन्

**(घ) तद्धितान्तः**

मैथिली – मैथिल + अण् + ङीप्

**टिप्पणम्**– सीतायाः ऋते इति स्यात् । ऋते इत्यस्य योगे पञ्चमी एव । सीताम् ऋते इति आर्षः प्रयोगः ।

---

### अभ्यासः – 54

### (श्लोकः 77)

1. **वाक्यानि रचयत**–

**[ वाक्य बनाएं।** Make sentences.]

| | | | |
|---|---|---|---|
| महाकपिः<br>विभीषणः<br>शिवः<br>विष्णुः<br>रामः | पार्वत्यै<br>रामाय<br>सीतायै<br>लक्ष्म्यै | प्रियमाख्यातुम् | आगच्छत् |

**यथा**– (क) महाकपिः रामाय प्रियमाख्यातुम् आगच्छत् ।

(ख) ..................................................... ।

(ग) ..................................................... ।

(ङ) ।

(च) ।

2. **सन्धिविच्छेदं कुरुत—**

[ **सन्धिविच्छेद करें।** Disjoin the *sandhi.*]

**यथा—** (क) पुनरायात् = **पुनः + आयात्** ।

(ख) पुनरागच्छत् = ............ ।

(ग) पुनराकर्षयत् = ............ ।

(घ) पुनरास्वादयत् = ............ ।

(ङ) पुनरगमत् = ............ ।

3. **यथोदाहरणं पूरयत—**

[ **उदाहरण के अनुसार पूरा करें।** Complete as shown in the example.]

**यथा—** (क) महाकपिः = **महान् च असौ कपिः (कर्मधारयः)** ।

(ख) महायोगी = ............ ।

(ग) महापुरुषः = ............ ।

(घ) महासती = ............ ।

(ङ) महर्षिः = ............ ।

(च) महादेवः = ............ ।

(छ) महाप्रसादः = ।

4. **विपरीतार्थकं शब्दं लिखत—**

[ **विलोम शब्द लिखें।** Write the antonyms.]

**यथा—** (क) प्रियम् = **अप्रियम्** ।

(ख) आयात् = ............ ।

(ग) सुन्दरम् = ............ ।

(घ) प्रभूतम् = ............ ।

(ङ) मन्दम् = ............ ।

**श्लोकः**

**सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।**
**न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥ 78 ॥**

**पदच्छेदः**

सः अभि-गम्य महात्मानम् कृत्वा रामं प्र-दक्षिणम् ।
न्यवेदयत् अमेयात्मा दृष्टा सीता इति तत्त्वतः ॥ 78 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| सः | तद्- द्० सर्व० पुं० प्र० एक० | न्यवेदयत् | नि–विद् कर्तरि लङ् प्रपु० एक० |
| अभिगम्य | ल्यबन्तम् अव्ययम् | अमेयात्मा | न्० पुं० प्र० एक० समस्तम् |
| महात्मानम् | महात्मन्- न्० पुं० द्विती० एक० समस्तम् | दृष्टा | आ० स्त्री० प्र० एक० |
| कृत्वा | क्त्वान्तम् अव्ययम् | सीता | आ० स्त्री० प्र० एक० |
| रामम् | अ० पुं० द्विती० एक० विशेष्यम् | इति | अव्ययम् |
| | | तत्त्वतः | तद्धितान्तम् अव्ययम् |
| प्रदक्षिणम् | अ० नपुं० द्विती० एक० समस्तम् | | |

**आकाङ्क्षा**

**(हनुमान्) न्यवेदयत्।**

| | |
|---|---|
| कीदृशः सः न्यवेदयत् ? | अमेयात्मा सः न्यवेदयत् । |
| अमेयात्मा कम् अभिगम्य न्यवेदयत् ? | अमेयात्मा रामम् अभिगम्य न्यवेदयत् । |
| कीदृशं रामम् अभिगम्य न्यवेदयत् ? | महात्मानं रामम् अभिगम्य न्यवेदयत् । |
| किं कृत्वा न्यवेदयत् ? | प्रदक्षिणं कृत्वा न्यवेदयत् । |
| का तत्त्वतः दृष्टा इति न्यवेदयत् ? | सीता तत्त्वतः दृष्टा इति न्यवेदयत् । |

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| अनघः | निष्पापः | निष्पाप | the sinless |
| रामः | राघवः | राम | Śrī Rāma |
| भ्रातृभिः सहितः | अनुजैः युक्तः | भाइयों के साथ | with brothers |
| नन्दिग्रामे | नन्दिनामके स्थाने | नन्दिग्राम में | at *Nandigrāma* |
| जटाम् | सटाम् | जटा को | matted hair |
| हित्वा | त्यक्त्वा | त्यागकर | having disentangled |
| सीताम् | जानकीम् | सीता को | Sītā |
| अनुप्राप्य | समीपं स्थाप्य | पास बैठा कर | having got back |
| राज्यम् | साम्राज्यम् | राज्य को | (his) kingdom |
| पुनः अवाप्तवान् | पुनः अलभत | पुनः प्राप्त किया | regained |

**भावार्थः**

**संस्कृतम्**– निष्पापः रामः अनुजैः समुपेतः नन्दिग्रामे जटां त्यक्त्वा सीताञ्च समीपं संस्थाप्य पितुः वचनात् पूर्वं प्राप्तं अयोध्याराज्यम् पुनः अद्य प्राप्तवान् ।

**हिन्दी**– निष्पाप राम अपने अनुज भरतादि के सहित नन्दिग्राम में जटा का शोधन करके सीता को साथ बैठाकर फिर अयोध्या राज्य को प्राप्त किया; जिसे पहले पिता के वचन से त्याग दिया था।

**आंग्लम्**– Having disentangled his matted hair at Nandigrāma alongwith his (three) brothers and got back Sītā, the sinless Rāma regained his kingdom (too).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

सहितोऽनघः – सहितः + अनघः (विसर्ग-सन्धिः)

पुनरवाप्तवान् – पुनः + अवाप्तवान् (विसर्ग-सन्धिः)

**(ख) समासः**

अनघः – न अघं यस्य सः (बहुव्रीहिः)

**(ग) कृदन्तौ**

हित्वा – हा + क्त्वा

अनुप्राप्य – अनु + प्र + आप् + ल्यप्

---

## अभ्यासः – 65

## (श्लोकः 89)

1. **यथान्वयं रिक्तस्थानं पूरयत–**

[**अन्वय के अनुसार रिक्त-स्थान की पूर्ति करें।** Fill in the blanks to make it the construation of the verse.]

अनघः .............. भ्रातृभिः जटां हित्वा

अनुप्राप्य राज्यं .............. .............................. ।

2. **शब्दम् अर्थेन योजयत–**

[**शब्द को अर्थ से जोड़ें।** Join the word with its meaning.]

| | | | | |
|---|---|---|---|---|
| **यथा–** (i) | हित्वा | | (क) | भूयः |
| (ii) | अनघः | | (ख) | सटाम् |
| (iii) | जटाम् | | (ग) | लब्धवान् |
| (iv) | अवाप्तवान् | | (घ) | निष्पापः |
| (v) | पुनः | | (ङ) | त्यक्त्वा |

3. **बहुव्रीहिसमासस्य पञ्च उदाहरणानि स्वयं लिखत–**

[**बहुव्रीहि समास के पाँच उदाहरण स्वयं लिखें।** Write five examples of *bahuvrīhi* compound by yourself.]

**यथा–** (क) **न अघं यस्य सः अनघः** ।

(ख) .............................................. ।

(ग) .............................................. ।

(घ) ............................................ ।

(ङ) ............................................ ।

4. **कर्मणि/कर्तरि परिवर्तयत–**

**[ वाच्य परिवर्तन करें।** Change the voice.]

(क) रामः पुनः राज्यम् अवाप्तवान्।

............................................ ।

(ख) सीता अग्निं प्रविष्टवती।

............................................ ।

(ग) रामः सीतां निर्वासितवान्।

............................................ ।

(घ) सीता वाल्मीकि-मुनेः आश्रमे द्वौ पुत्रौ प्रसूतवती।

............................................ ।

(ङ) रामः अश्वमेधयज्ञं कृतवान्।

............................................ ।

5. **स्वभाषया पञ्चवाक्यैः श्लोकस्य भावार्थं लिखत–**

**[ अपनी भाषा में पाँच ही वाक्यों में श्लोक के भावार्थ लिखें।** Write the meaning of the verse with five sentences of your own Language.]

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक पत्रे लिखत-**

**[ दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) जटा (ख) हित्वा (ग) भ्रातृ (घ) सहित (ङ) अनघ

**श्लोकः**

**प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।**
**निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ 90 ॥**

**पदच्छेदः**

प्रहृष्ट–मुदितः लोकः तुष्टः पुष्टः सु-धार्मिकः ।
निर् आमयः हि अरोगः च दुर्भिक्ष–भय–वर्जितः ॥ 90 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| प्रहृष्टमुदितः | अ० पुं० प्र० एक० | निरामयः | अ० पुं० प्र० एक० |
| लोकः | अ० पुं० प्र० एक० | | समस्तम् |
| तुष्टः | अ० पुं० प्र० एक० | हि | अव्ययम् |
| पुष्टः | अ० पुं० प्र० एक० | अरोगः | अ० पुं० प्र० एक० समस्तम् |
| सुधार्मिकः | अ० पुं० प्र० एक० समस्तम् | च | अव्ययम् |
| | | दुर्भिक्ष-भय-वर्जितः | अ० पुं० प्र० एक० समस्तम् |

**आकाङ्क्षा**

**रामस्य राज्यारोहणस्य अनन्तरम्**

| | |
|---|---|
| लोकः कीदृशः भविष्यति ? | प्रहृष्टमुदितः । |
| पुनः कीदृशः ? | तुष्टः । |
| पुनश्च कीदृशः ? | पुष्टः । |
| पुनश्च कीदृशः ? | सुधार्मिकः । |
| पुनः कीदृशः ? | निरामयः । |
| पुनश्च कीदृशः ? | अरोगः । |
| पुनः कीदृशः ? | दुर्भिक्षभयवर्जितः । |

**अन्वयः**

लोकः हि (राज्यम् अधिरूढे रामे) प्रहृष्टमुदितः तुष्टः पुष्टः सुधार्मिकः निरामयः अरोगः दुर्भिक्षभयवर्जितः च भविष्यति ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| लोकः | प्रजाः | लोग | people |
| हि | तु | तो | positively |
| प्रहृष्टमुदितः | प्रसन्नः आनन्दितः च | हर्षित एवं प्रमुदित | much delighted |
| तुष्टः | सन्तुष्टः | सन्तुष्ट | cheerful or contended |
| पुष्टः | शक्तः | पुष्ट | well-fed |
| सुधार्मिकः | धर्माचरणरतः | सुधर्म में तत्पर | exceedingly pious |
| निरामयः | मानसव्यथारहितः | मनोरोग रहित | free from mental agony |
| अरोगः | शरीर-रोगवर्जितः | शारीरिक रोग रहित | free form bodily ailment |
| दुर्भिक्षभयवर्जितः | अवृष्ट्यादिभीतिरहितः | अकाल भयमुक्त | rid of famine and fear |

**भावार्थः**

**संस्कृतम्**– राज्यमधिरूढे रामे सर्वजनः आनन्देन रोमाञ्चितः प्रसन्नः सन्तुष्टः परिपुष्टदेहः सम्यक् धर्मरतः अन्तर्बाह्यरोगमुक्तः (अधि–व्याधि–मुक्तः) अकालजन्यपीडारहितः भविष्यति।

**हिन्दी**– राम के राज्याधिरूढ हो जाने पर समस्त प्रजाजन आनन्द से रोमाञ्चित, प्रसन्न, सन्तुष्ट, सर्वथा पुष्ट तथा सुधार्मिक सर्वरोगमुक्त एवं अकालादि पीड़ा रहित रहेंगें।

**आंग्लम्**– (During the reign of Śrī Rāma) people will be positively much delighted and cheerful, contented and well-fed, exceedingly pious, free from mental agony and bodily ailments and rid of (the scourge of) famine and fear (of theft etc.).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

मुदितो लोकः – मुदितः + लोकः (विसर्ग-सन्धिः)

लोकस्तुष्टः – लोकः + तुष्टः (विसर्ग-सन्धिः)
निरामयो ह्यरोगः – निरामयः + ह्यरोगः (विसर्ग-सन्धिः)
ह्यरोगः – हि + अरोगः (यण्-सन्धिः)
अरोगश्च – अरोगः + च (विसर्ग-सन्धिः)

**(ख) तद्धितान्तः**

धार्मिकः – धर्म + ठक् (इक) (धर्मं चरति इति)

**(ग) समासः**

प्रहृष्टः – प्रकर्षेण हृष्टः (प्रादि-तत्पु०)
प्रहृष्ट-मुदितः – प्रहृष्टश्चासौ मुदितश्चेति (कर्मधारयः)
सुधार्मिकः – धर्मं चरति इति धार्मिकः (उपपद-तत्पु०) शोभनश्चासौ धार्मिकश्चेति सुधार्मिकः (कर्मधारयः)
निरामयः – निर्गताः आमयाः यस्य सः (बहुव्रीहिः)
अरोगः – न रोगः यस्य सः (बहुव्रीहिः)
दुर्भिक्षभयवर्जितः – भिक्षाणां व्यृद्धिः दुर्भिक्षम् (अव्ययीभावः); (तस्य भयम् दुर्भिक्षभयम् (ष० तत्पु०); दुर्भिक्षभयेन वर्जितः दुर्भिक्षभयवर्जितः (तृ० तत्पु०)

**(घ) कृदन्ताः**

प्रहृष्टः = प्र + हृष् + क्त
पुष्टः = पुष् + क्त
तुष्टः = तुष् + क्त
मुदितः = मुद् + क्त

**(ii) कोशः**

आमयः – मनःपीडा, मनोव्यथा

**अवधेयम्**

**क्त-प्रत्ययविषये**

## अभ्यासः - 66
### (श्लोकः 90)

1. **समस्तपदानां विग्रहं लिखत–**

[ **समस्तपदों का विग्रह लिखें।** Write the analytical sentence of the compound words.]

**यथा–** (क) निरामयः = **निर्गताः आमयाः यस्य सः** ।
(ख) विज्वरः = ।
(ग) नीरोगः = ।
(घ) अनघः = ।
(ङ) अशोकः = ।
(च) विशोकः = ।
(छ) विगतकल्मषः = ।

2. **समस्तपदानि लिखत–**

[ **समस्तपद लिखें।** Write the compound words.]

**यथा–** (क) कपीनां कुलम् = **कपिकुलम्** ।
(ख) अग्नेः वर्षणम् = ।
(ग) राक्षसानाम् इन्द्रः = ।
(घ) दुर्भिक्षात् भयम् = ।
(ङ) देशानाम् अटनम् = ।
(च) भरद्वाजस्य आश्रमः= ।

3. **सप्तम्यन्त-पदेन रिक्तस्थानं पूरयत–**

[ **सप्तम्यन्त पद से रिक्तस्थान भरें।** Fill in the blanks words ending in locative case-endings.]

**यथा–** (क) रामः रावणम् (आहव) **आहवे** जघान ।
(ख) रामः (नन्दिग्राम) जटां त्यक्तवान् ।
(ग) रामः (भरद्वाजाश्रम) हनुमन्तं भरतस्य समीपे प्रेषितवान् ।
(घ) सीतां रावणः (अशोकवनिका) स्थापितवान् ।
(ङ) हनुमान् (लङ्का) सीताम् अन्विष्टवान् ।
(च) (मिथिला) सीतास्वयम्वरः अभवत् ।

4. **असमानं पदं चिनुत–**

**[ असमान पद चुनें।** Point out the odd word.]

(क) माता, जननी, स्वसा, अम्बा ........................................।

(ख) गमनम्, चन्दनम्, पठनम्, भाषणम् ।

(ग) अश्वः, गजः, गौः, वृक्षः ।

(घ) पिता, जनकः, नापितः, तातः ........................................।

5. **क्त्वान्त-पदेन रिक्तस्थानं पूरयत–**

**[ क्त्वान्त पद से रिक्तस्थान भरें।** Fill in the blanks with the words ending in *Ktvā-suffix.*]

**यथा–** (क) रामराज्ये जनाः निरामयाः (भू) ............**भूत्वा**........ स्थास्यन्ति।

(ख) रामः भ्रातृभिः सह जटां (हा) अयोध्यां प्रस्थितवान्।

(ग) रामः भरद्वाजाश्रमे (स्था) हनुमन्तं भरतस्यान्तिके प्रेषितवान्।

(घ) रामः देवताभ्यः वरं (लभ्) ............................ वानरान् समुत्थापितवान्।

(ङ) रामः विगतकल्मषां सीतां (आप्) प्रमुदितवान्।

(च) रामः लङ्कापुरीं (गम्) रावणं जघान।

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

**[ दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) पुष्ट (ख) निरामय (ग) अरोग (घ) वर्जित (ङ) तुष्ट

**श्लोकः**

**न पुत्रमरणं केचिद् द्रक्ष्यन्ति पुरुषाः क्वचित् ।**
**नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥ 91 ॥**

**पदच्छेदः**

न पुत्र-मरणं केचित् द्रक्ष्यन्ति पुरुषाः क्वचित् ।
नार्यः च अविधवाः नित्यं भविष्यन्ति पति-व्रताः ॥ 91 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| न | अव्ययम् | क्वचित् | अव्ययम् |
| पुत्रमरणम् | अ० नपुं० द्विती० एक० | नार्यः | ई० स्त्री० प्र० बहु० |
| केचित् | अव्ययम् | च | अव्ययम् |
| द्रक्ष्यन्ति | दृश्- कर्तरि लृट् प्रपु० बहु० | अविधवाः | आ० स्त्री० प्र० बहु० |
| | | नित्यम् | अ० नपुं० द्विती० एक० |
| पुरुषाः | अ० पुं० प्र० बहु० | भविष्यन्ति | भू- कर्तरि लृट् प्रपु० बहु० |
| | | पति-व्रताः | आ० स्त्री० प्र० बहु० |

**आकाङ्क्षा**

**न द्रक्ष्यन्ति।**

| | |
|---|---|
| के पुरुषाः न द्रक्ष्यन्ति ? | केचिद् (अपि) पुरुषाः न द्रक्ष्यन्ति। |
| पुरुषाः किं न द्रक्ष्यन्ति ? | पुत्रमरणं न द्रक्ष्यन्ति। |
| कुत्र न द्रक्ष्यन्ति ? | क्वचिद् (अपि) न द्रक्ष्यन्ति। |

**भविष्यन्ति।**

| | |
|---|---|
| नार्यः कथम्भूताः भविष्यन्ति ? | नार्यः अविधवाः पतिव्रताः च भविष्यन्ति। |
| कदा भविष्यन्ति ? | नित्यं भविष्यन्ति। |

**अन्वयः**

केचिद् (अपि) पुरुषाः क्वचित् पुत्रमरणं न द्रक्ष्यन्ति। नार्यः नित्यम् अविधवाः पतिव्रताः च भविष्यन्ति।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| केचित् | केचन | कोई | any |
| पुरुषाः | जनाः | पुरुष | men |
| क्वचित् | कुत्रचिद् अपि | कहीं भी | anywhere |
| पुत्रमरणम् | सुतमृत्युम् | पुत्रमरण | death of (their) son or daughter |
| न द्रक्ष्यन्ति | न अवलोकिष्यन्ते | नहीं देखेगें | will not witness |
| नार्यः | स्त्रियः | नारियाँ | women |
| पतिव्रताः | पत्यनुकूलाः | पतिव्रता | will be ever devoted to their husbands |
| नित्यम् अविधवाः | सततं सौभाग्यवत्यः | हमेशा सौभाग्यवती | never widows |
| च | च | और | and |
| भविष्यन्ति | वर्त्स्यन्ति | रहेगीं | will be |

**भावार्थः**

**संस्कृतम्**— रामराज्ये कस्यचिद् अपि पितुः पुरस्तात् पुत्रस्य मृत्युः न सम्भविष्यति। नार्यः सदैव सौभाग्यशालिन्यः पतिव्रताः च भविष्यन्ति।

**हिन्दी**— श्री राम के राज्य में कोई भी पिता अपने पुत्र का मरण नहीं देखेगा। नारियाँ सदैव सौभाग्यशालिनी एवं पतिव्रता बनी रहेगीं।

**आंग्लम्**— Nowhere will any men witness the death of their son or daughter, women will never be widows and will be ever devoted to their husband.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

नार्यश्च – नार्यः + च (विसर्ग-सन्धिः)

चाविधवाः – च + अविधवाः (दीर्घ-सन्धिः)

**(ख) समासः**

| | | |
|---|---|---|
| पुत्रमरणम् | – | पुत्रस्य पुत्राणां वा मरणम् (ष० तत्पु०) |
| अविधवाः | – | न विधवाः अविधवाः (नञ् तत्पु०) विगताः धवाः यासां ताः (विधवाः = विपतिकाः) न विधवाः अविधवाः (सौभाग्यवत्यः) |
| पतिव्रताः | – | पतिः एव व्रतं यासां ताः (बहुव्रीहिः) |

**अवधेयम्**

**चित्-चन इति अव्ययप्रयोगविषये**

---

## अभ्यासः – 67
### (श्लोकः 91)

1. **श्लोकस्थ-क्रियापदयोः रूपं पूरयत–**

[ **श्लोकस्थ क्रियापदों के रूप पूरा करें।** Complete the forms of the verbs in the verses.]

| | | | | एक० | द्वि० | बहु० |
|---|---|---|---|---|---|---|
| **यथा–** | (क) | दृश् कर्तरि लृट् | प्रपु० | **द्रक्ष्यति** | **द्रक्ष्यतः** | **द्रक्ष्यन्ति** |
| | | | मपु० | | | |
| | | | उपु० | | | |
| | (ख) | भू कर्तरि लृट् | प्रपु० | | | |
| | | | मपु० | | | |
| | | | उपु० | | | |

2. **यथोदाहरणं रिक्तस्थानं पूरयत–**

[ **उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as shown in the example.]

**यथा–** (क) कः + चित् = **कश्चित्**	(ख) कौ + चित् =

(ग) के + चित् =	(घ) किम् + चित् =

(ङ) के + चित् = (च) कानि + चित् =

(छ) का + चित् = (ज) केन + चित् =

(झ) कस्मै + चित् = (ञ) कयोः + चित् =

(ट) केभ्यः + चित् = (ठ) कैः + चित् =

(ड) कस्य + चित् = (ढ) कस्मिन् + चित् =

(ण) कस्यां + चित् = (त) केषु + चित् =

3. **रिक्तस्थानं पूरयत—**

[**रिक्तस्थान की पूर्ति करें।** Fill in the blanks.]

**यथा—** (क) क्वचित् = **क्व + चित्** (ख) कुत्रचित् =

(ग) कदाचित् = (घ) कर्हिचित् =

(ङ) केचन = **के + चन** (च) कश्चन =

(छ) कस्यचन = (ज) कांश्चन =

4. **समस्तपदं लिखत—**

[**समस्तपद लिखें।** Write the compound word.]

**यथा—** (क) पतिव्रताः = **पतिः व्रतं यासाम्** (ख) सत्यव्रताः =

(ग) दृढव्रताः = (घ) कठोरव्रताः = ..........

(ङ) देवव्रताः = (च) अहिंसाव्रताः = ..........

5. **असमानं पदं पृथक्कुरुत—**

[**असमान पदों को पृथक् करें।** Separate the odd word.]

(क) पतिव्रता, विधवा, सती, सत्पुरुषः

(ख) सुजनः, सज्जनः, चोरः, साधुः

(ग) बालः, बालकः, डिम्भः, वृद्धः

(घ) माता, छात्रः, पुत्रः, पिता

(ङ) द्रक्ष्यन्ति, भविष्यन्ति, लभते, करिष्यन्ति

**श्लोकः**

**न चाग्निजं भयं किञ्चिन् नाप्सु मज्जन्ति जन्तवः।**
**न वातजं भयं किञ्चिन् नापि ज्वरकृतं तथा ॥ 92 ॥**

**पदच्छेदः**

न च अग्नि-जम् भयम् किञ्चित् न अप्सु मज्जन्ति जन्तवः।
न वातजम् भयम् किञ्चित् न अपि ज्वर-कृतं तथा ॥ 92 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| अग्निजम् | अ० नपुं० प्र० एक० समस्तम् | न | अव्ययम् |
| भयम् | अ० नपुं० प्र० एक० | वातजम् | अ० नपुं० प्र० एक० समस्तम् |
| किञ्चित् | अव्ययम् | भयम् | अ० नपुं० प्र० एक० |
| अप्सु | अप्- पू० स्त्री० स० बहु० | अपि | अव्ययम् |
| मज्जन्ति | मस्ज्- कर्तरि लट् प्रपु० बहु० | ज्वरकृतम् | अ० नपुं० प्र० एक० समस्तम् |
| जन्तवः | उ० पुं० प्र० बहु० | तथा | तद्धितान्तम् अव्ययम् |

**आकाङ्क्षा**

| | |
|---|---|
| पुनः रामराज्ये किं किं न भविष्यति ? | अग्निजं किञ्चिद् भयं न (भविष्यति) |
| पुनः किम् ? | न मज्जन्ति। |
| के न मज्जन्ति ? | जन्तवः न मज्जन्ति। |
| कुत्र न मज्जन्ति ? | अप्सु न मज्जन्ति। |
| पुनः किं न ? | किञ्चिद् वातजं भयं न (भविष्यति)। |
| पुनः किं न ? | ज्वरकृतम् अपि तथा न। |

**अन्वयः**

न च अग्निजं किञ्चिद् भयम्, न (च) अप्सु जन्तवः मज्जन्ति न किञ्चिद् वातजं भयम्, न अपि ज्वरकृतं तथा।

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| न च | नापि | ही | nor (will there be) |
| अग्निजम् | अग्निहेतुकम् | अग्नि से होने वाला | caused by fire |
| किञ्चिद् | किञ्चन | कोई | any |
| भयम् | भीतिः | भय | fear |
| न | न | न (ही) | nor |
| अप्सु | जले | जल में | in water |
| जन्तवः | प्राणिनः | प्राणी | living beings |
| मज्जन्ति | निमग्नाः भवन्ति | डूबते हैं | be drowned |
| न किञ्चद् | न किञ्चन | न ही कोई | nor any |
| वातजम् | वायुजनितम् | वायु सम्बद्ध | caused by wind |
| भयम् | भीतिः | भय | fear |
| न | न | न | nor |
| अपि | अपि | ही | even |
| ज्वरकृतम् | देहपीडादिरूपम् | ज्वर से | (fear) caused by fever |
| तथा | तथा (भयम्) | भय | also |

**भावार्थः**

**संस्कृतम्**– रामराज्ये अग्निजनिता दाहादिभीतिः अपि काचिद् न भविष्यति। प्राणिनां जले निमज्जनेन अकालमृत्युभयम् अपि नास्ति। वायुजनितम् अतिवातादिभयम् अपि न सम्भवति। एवञ्च यथा पूर्वोक्तम् आधिदैविकं भयं न तथैव ज्वरादिरूपम् आधिभौतिकम् अपि भयं लोकान् न त्रासयति।

**हिन्दी**– श्रीराम के राज्य में अग्निकाण्ड का कोई भय नहीं रहेगा। प्राणियों के पानी में डूबने का भी कोई भय नहीं होगा। इसी प्रकार अकालमृत्यु रूप कोई आधिदैविक भय नहीं रहेगा। इसी प्रकार ज्वरपीड़ा आदि जैसे आधिभौतिक कष्ट भी नहीं होगें।

**आंग्लम्**- There will be no fear from fire nor will living beings be drowned in water. There will be no fear of wind nor any fear of fever.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

| | | |
|---|---|---|
| चाग्निजम् | = | च + अग्निजम् (दीर्घ-सन्धिः) |
| केचिन्न | = | केचित् + न (अनुनासिकः) |
| नाप्सु | = | न + अप्सु (दीर्घ-सन्धिः) |
| किञ्चिन्न | = | किञ्चित् + न (अनुनासिकः) |
| नापि | = | न + अपि (दीर्घ-सन्धिः) |

**(ख) समासः**

| | | |
|---|---|---|
| अग्निजम् | – | अग्नेः जायते (उपपदतत्पु०) |
| वातजम् | – | वातात् जायते (उपपदतत्पु०) |
| ज्वरकृतम् | – | ज्वरेण कृतम् (तृ० तत्पु०) |

**(ख) कृदन्तौ**

| | | |
|---|---|---|
| अग्निज | – | अग्नि + जन् + ड |
| वातज | – | वात + जन् + ड |

---

### अभ्यासः – 68
### (श्लोकः 92)

1. **श्लोकात् पदानि चित्वा लिखत–**
[ **श्लोक से पद चुनकर लिखें।** Write words from the verse.]

**यथा–**
(क) अ० नपुं० प्र० एक० = ............**भयम्**............
(ख) उ० पुं० प्र० बहु० =
(ग) निषेधार्थकमव्ययम् =
(घ) पृ० स्त्री० स० बहु० =

2. **श्लोकात् दीर्घसन्धियुक्तानि पदानि सङ्कलयत–**
[**श्लोक से दीर्घसन्धियुक्त पदों का संकलन करें।** Compile the words having *dīrghasandhi.*]

3. **सत्यम् ✔ असत्यं × वा लिखत–**
[**सत्य ✔ या असत्य × लिखें।** Write true ✔ or false × .]

(क) रामराज्ये अग्निजं भयं नासीत्। ☐
(ख) रामराज्ये जलभयमपि नासीत्। ☐
(ग) रामराज्ये ज्वरकृतं भयम् नासीत्। ☐
(घ) श्लोकस्थं मुख्य-क्रियापदं लृट्लकारे वर्तते। ☐
(ङ) श्लोके निषेधार्थकम् अव्ययं 'न' चतुर्वारं प्रयुक्तमस्ति। ☐

4. **असमानं पदं पृथक् कुरुत–**
[**असमान पद को पृथक् करें।** Separate the odd word.]

(क) अग्निजम्, जलजम्, वातजम्, ज्वरः
(ख) आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकम्, अधिकरणम्
(ग) न, तथा, अपि, च, अग्निः
(घ) केचित्, किञ्चित्, केन, क्वचित्
(ङ) अप्सु, बालुकासु, धनेषु, बालकौ
(च) ब्राह्मणः, क्षत्रियः, वैश्यः, बालकः

5. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत–**
[**दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) अप् (ख) मस्ज् (लटि, लृटि लङि च) (ग) जन्तु (घ) ज्वर

**श्लोकः**

न चापि क्षुद्भयं तत्र न तस्करभयं तथा।
नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥ 93 ॥
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा।
॥ 94 ॥

**पदच्छेदः**

न च अपि क्षुद्-भयं तत्र न तस्कर-भयं तथा।
नगराणि च राष्ट्राणि धन-धान्य-युतानि च ॥ 93 ॥
नित्यं प्र-मुदिताः सर्वे यथा कृत-युगे तथा।
॥ 94 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| क्षुद्-भयम् | अ० नपुं० प्र० एक० समस्तम् | धन-धान्य-युतानि | अ० नपुं० प्र० बहु० समस्तम् |
| तस्कर-भयम् | अ० नपुं० प्र० एक० समस्तम् | नित्यम् | अ० नपुं० द्विती० एक० |
| | | प्रमुदिताः | अ० पुं० प्र० बहु० समस्तम् |
| नगराणि | अ० नपुं० प्र० बहु० | कृतयुगे | अ० नपुं० स० एक० समस्तम् |
| राष्ट्राणि | अ० नपुं० प्र० बहु० | | |

**आकाङ्क्षा**

**न (अस्ति)।**

| | |
|---|---|
| तत्र (रामराज्ये) अन्यत् किं भयं न ? | क्षुद्भयं च अपि न। |
| पुनः किं न ? | तथा तस्कर-भयं च न। |
| नगराणि राष्ट्राणि च कीदृशानि ? | नगराणि राष्ट्राणि च धन-धान्ययुतानि। |
| सर्वे (लोकाः) कीदृशाः ? | सर्वे नित्यं प्रमुदिताः। |
| सर्वे कीदृक् प्रमुदिताः ? | यथा कृतयुगे तथा (अत्र) प्रमुदिताः। |

**अन्वयः**

न च अपि तत्र क्षुद्भयम्, तथा (एव) तस्करभयम् (अपि) न। नगराणि राष्ट्राणि च धनधान्ययुतानि। सर्वे तथा प्रमुदिताः यथा कृतयुगे।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| न च | न च | और न | nor (will be) |
| तत्र | तस्मिन् (रामराज्ये) | वहाँ (राम राज्य में) | there |
| अपि | अपि | भी | also |
| क्षुद्भयम् | बुभुक्षात्रासः | भूख का भय | fear of starvation |
| तथा | च | और | and |
| न | न | न | nor |
| तस्करभयम् | चौरभयम् | चोर का भय | the fear of thieves |
| नगराणि | पुराणि | नगर | cities |
| राष्ट्राणि | जनपदाश्च | प्रदेश | states |
| च | च | और | and |
| धनधान्ययुतानि | सर्वसमृद्धिमन्ति | सर्वसमृद्धिशाली | (will be) full of riches and food-grains |
| सर्वे | निखिलाः | सभी लोग | all |
| तथा प्रमुदिताः | तथा प्रसन्नाः | उसी प्रकार प्रसन्न | (will be) ever extremely happy |
| यथा | यथा | जैसे | as |
| कृतयुगे | सत्ययुगे | सत्ययुग में | in *Satyayuga* |

**भावार्थः**

**संस्कृतम्**– एवम् एव रामराज्ये कोऽपि बुभुक्षितः न भविष्यति। चौर्यत्रासः अपि न भविष्यति। नगराणि ग्रामाः प्रदेशाः च समृद्धाः भविष्यन्ति। सर्वः लोकः सत्ययुगे इव रामराज्ये आनन्दितः भविष्यति।

**हिन्दी**— इस प्रकार राम राज्य में न भूख का भय और न चोर का भय रहेगा। नगर एवं प्रदेश सभी प्रकार से समृद्ध रहेगें। सभी लोग उसी प्रकार प्रसन्न रहेगें जैसे सत्ययुग में।

**आंग्लम्**— Nor will there be fear of starvation in his kingdom nor that of thieves. Nay, cities and states will be full of riches and food-grains. All will be ever extremely happy as in Satyayuga.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

चापि – च + अपि (दीर्घ-सन्धिः)

**(ख) समासः**

क्षुद्भयम् – क्षुधः भयं क्षुद्भयम् (प० तत्पु०)

तस्कर-भयम् – तस्कराद् भयं तस्करभयम् (प० तत्पु०)

धनधान्य-युतानि – धनं च धान्यं च धनधान्ये (द्वन्द्वः); ताभ्यां युतानि (तृ० तत्पु०)

कृत-युगे – कृतञ्च तद् युगम् कृतयुगं (कर्मधारयः) तस्मिन्

**(ग) कृदन्तः**

प्रमुदिताः = प्र + मुद् + क्त = प्रमुदित

---

### अभ्यासः – 69
### (श्लोकः 93-94)

1. **शब्दयुग्मं पूरयत—**

**[ शब्दयुग्म को पूरा करें।** Complete the pair.]

यथा— (क) यत्र – ........ **तत्र** (ख) यथा –

(ग) चेत्/यदि – (घ) यतः/यस्मात् –

(ङ) यदा – (च) इतः –

2. **सत्यम् ✓ असत्यं × वा निर्दिशत—**

**[ सत्य ✓ या असत्य × बताएं।** Say true ✓ or false × .]

**यथा**– (क) नगराणि इति पदं नपुंसकलिङ्गे वर्तते। [✔]

(ख) नित्यम् इति एकम् अव्ययपदम्। [ ]

(ग) तस्करभयम् इति समस्तपदं न। [ ]

(घ) कृतयुगे इत्यत्र षष्ठी विभक्तिः। [ ]

(ङ) सर्वे इति सर्वनामपदम् अस्ति। [ ]

**3. समानार्थकं पदं लिखत–**

**[ समानार्थक पद लिखें।** Write the synonym.]

**यथा**– (क) प्रमुदिताः = ........**प्रसन्नाः**........

(ख) तस्कराः =

(ग) कृतयुगे =

(घ) नगराणि =

(ङ) राष्ट्राणि =

(च) धनम् =

**4. विपरीतार्थकं पदं लिखत–**

**[ विलोम पद लिखें।** Write the antonym.]

**यथा**– (क) नित्यम् = ........**अनित्यम्**........

(ख) तस्करः =

(ग) प्रमुदिताः =

(घ) न =

(ङ) भयम् =

**5. श्लोकं स्मरत रिक्तस्थानं च पूरयत–**

**[ श्लोक को याद करें और रिक्तस्थान भरें।** Remember the verse and fill in the blanks.]

न चापि तत्र तथा। च राष्ट्राणि

च। नित्यं सर्वे कृतयुगे तथा।

**श्लोकः**

**।**

**अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ 94 ॥**

**गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् ।**
**असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ॥ 95 ॥**

**राजवंशाञ्छतगुणान् स्थापयिष्यति राघवः ।**
**चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे-स्वे धर्मे नियोक्ष्यति ॥ 96 ॥**

**पदच्छेदः**

।

अश्वमेध-शतैः इष्ट्वा तथा बहु-सुवर्णकैः ॥ 94 ॥

गवां कोट्ययुतं दत्त्वा विद्वद्भ्यः विधि-पूर्वकम् ।
असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यः महा-यशाः ॥ 95 ॥

राज-वंशान् शत-गुणान् स्थापयिष्यति राघवः ।
चातुर्वर्ण्यं च लोके अस्मिन् स्वे-स्वे धर्मे नि-योक्ष्यति ॥ 96 ॥

**पदपरिचयः**

| **पदम्** | **विश्लेषणम्** | **पदम्** | **विश्लेषणम्** |
|---|---|---|---|
| अश्वमेधशतैः | अ० पुं० तृ० बहु० समस्तम् | विद्वद्भ्यः | स्० पुं० च० बहु० |
| | | विधिपूर्वकम् | अ० नपुं० द्विती० एक० समस्तम् |
| इष्ट्वा | क्त्वान्तम् अव्ययम् | | |
| बहुसुवर्णकैः | अ० नपुं० तृ० बहु० समस्तम् | असंख्येयम् | अ० नपुं० द्विती० एक० समस्तम् |
| गवाम् | ओ० स्त्री० ष० बहु० | धनम् | अ० नपुं० द्विती० एक० |
| कोट्ययुतम् | अ० नपुं० द्विती० एक० समस्तम् | ब्राह्मणेभ्यः | अ० पुं० च० बहु० |
| | | महायशाः | स्० पुं० प्र० एक० |
| दत्त्वा | क्त्वान्तम् अव्ययम् | राजवंशान् | अ० पुं० द्विती० बहु० समस्तम् |

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| शतगुणान् | अ० पुं० द्विती० बहु० समस्तम् | अस्मिन् | इदम्- म्० सर्व० पुं० स० एक० |
| स्थापयिष्यति | स्था- णिच् कर्तरि लृट्० प्रपु० एक० | स्वे | अ० पुं०/नपुं० स० एक० |
| | | धर्मे | अ० पुं०/नपुं० स० एक० |
| चातुर्वर्ण्यम् | अ० नपुं० द्विती० एक० | नियोक्ष्यति | नि+युज्- कर्तरि लृट् प्रपु० एक० |
| लोके | अ० पुं० स० एक० | | |

**आकाङ्क्षा**

**स्थापयिष्यति।**

| | |
|---|---|
| कः स्थापयिष्यति ? | राघवः स्थापयिष्यति। |
| कीदृशः राघवः स्थापयिष्यति ? | महायशाः राघवः स्थापयिष्यति। |
| कान् स्थापयिष्यति ? | राजवंशान् स्थापयिष्यति। |
| कीदृशान् राजवंशान् स्थापयिष्यति ? | शतगुणान् राजवंशान् स्थापयिष्यति। |
| किं कृत्वा स्थापयिष्यति ? | इष्ट्वा स्थापयिष्यति। |
| कैः इष्ट्वा ? | अश्वमेधशतैः इष्ट्वा। |
| कीदृशैः अश्वमेधशतैः ? | बहुसुवर्णकैः अश्वमेधशतैः। |
| **पुनश्च किं कृत्वा ?** | दत्त्वा। |
| किं दत्त्वा ? | कोट्ययुतं दत्त्वा। |
| कासाम् कोट्युतं दत्त्वा ? | गवां कोट्ययुतं दत्वा। |
| केभ्यः दत्त्वा ? | विद्वद्भ्यः दत्त्वा। |
| कथं दत्त्वा ? | विधिपूर्वकम्। |
| पुनश्च किं कृत्वा स्थापयिष्यति ? | दत्त्वा। |
| किं दत्त्वा ? | धनं दत्त्वा। |
| कियद् धनं दत्त्वा ? | असख्येयं धनं दत्त्वा। |
| केभ्यः दत्त्वा ? | ब्राह्मणेभ्यः दत्त्वा। |

**(राघवः) नियोक्ष्यति।**

| | |
|---|---|
| राघवः किं नियोक्ष्यति ? | राघवः चातुर्वर्ण्यं नियोक्ष्यति। |
| कुत्र नियोक्ष्यति ? | स्वे-स्वे धर्मे नियोक्ष्यति। |
| कुत्र नियोक्ष्यति ? | अस्मिन् लोके नियोक्ष्यति। |

**अन्वयः**

महायशाः राघवः अश्वमेधशतैः बहुसुवर्णकैः इष्ट्वा गवां कोट्ययुतं असंख्येयं धनं (च) विद्वद्भ्यः ब्राह्मणेभ्यः विधिपर्वूकं दत्त्वा राजवंशान् शतगुणान् स्थापयिष्यति। अस्मिन् लोके चातुर्वर्ण्यं स्वे-स्वे धर्मे नियोक्ष्यति च।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| महायशाः | महाकीर्तिः | महान् यश वाले | having great fame |
| राघवः | रामः | राम | Śri Rāma |
| अश्वमेधशतैः | बहुभिः अश्वमेधैः | सैकड़ो अश्वमेधों से | through hundreds of horse-sacrifices |
| बहुसुवर्णकैः | प्रचुर स्वर्णप्रयोगैः यागैः | प्रचुर सुवर्ण के उपयोग वाले | involving the use of abundant gold |
| इष्ट्वा | यजनं विधाय | यज्ञों को करके | having propitiated |
| तथा | अपि च | और | and (other sacrifices) |
| गवाम् | धेनूनाम् | गौओं के | of cows |
| कोट्ययुतम् | दशसहस्र-कोटिसंख्याकैः | दस हजार करोड़ | billion |
| असंख्येयम् | अपरिगणनीयम् | असंख्येय | uncountable |
| धनम् | द्रव्यम् | धन को | riches, wealth |
| च | च | और | and |
| विद्वद्भ्यः | विद्यावद्भ्यः | विद्वानों (को) | on the learned |
| ब्राह्मणेभ्यः | विप्रेभ्यः | ब्राह्मणों (को) | Brahmins |
| विधिपूर्वकम् | यथाशास्त्रम् | विधिविधान के अनुसार | bestowed with due ceremony |
| दत्त्वा | समर्प्य | देकर | having given |
| राजवंशान् | राजकुलानि | राजवंशों को | to royal dynasties |
| शतगुणान् | शतगुणवृद्धिपूर्वकम् | सौ गुने | a hundred times |
| स्थापयिष्यति | प्रतिष्ठापयिष्यति | स्थापित करेगा | will establish |

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| अस्मिन् लोके | इह संसारे | इस लोके में | in this terrestrial world |
| चातुर्वर्ण्यम् | चतुरः वर्णान् | चारों वर्णों को | four grades of society |
| स्वे-स्वे धर्मे | स्वे-स्वे कर्मणि | अपने-अपने कार्य में | to follow their respective duties |
| च | च | और | and |
| नियोक्ष्यति | प्रवर्तयिष्यति | लगाएगा | will direct |

**भावार्थः**

**संस्कृतम्**– महाकीर्तिः श्रीरामः प्रचुरस्वर्णप्रयोगेण शतैः अश्वमेधैः यज्ञं विधाय विद्यावद्भ्यः विप्रेभ्यः दशसहस्रकोटिपरिमिताः गाः अपरिगणनीयं धनं च यथाविधि समर्प्य पूर्वापेक्षया शतगुणितवृद्धियुतानि राजकुलानि प्रतिष्ठापयिष्यति। अस्मिन् जगति वर्णाश्रमव्यवस्थया लोकान् स्वे-स्वे कर्मणि प्रवर्तयिष्यति च।

**हिन्दी**– महायशस्वी श्रीराम प्रचुर स्वर्णों के उपयोग वाले सैकड़ों अश्वमेधों से यज्ञ करके तथा विद्वान् ब्राह्मणों को दस हजार करोड़ गाएँ एवं अपरिमित धनराशि शास्त्रविधिपूर्वक प्रदान करके पूर्व की अपेक्षा सैकड़ों गुने उत्तम राज्य की स्थापना करेगें तथा इस लोक में चारों वर्णों को अपने-अपने कर्तव्य में प्रवृत्त करगें।

**आंग्लम्**– Having propitiated the Lord through hundreds of horse-sacrifices and (other) sacrifices involving the use of abundant gold, (nay) bestowed with due ceremony a billion cows on the learned and given away untold riches to the Brāhmaṇas, the highly renowned Rāma will establish royal dynasties a hundered times more prosperous than before (by not only recognizing and confirming their sovereignty but even by liberally subsidizing them). Nay, he will direct the people belonging to (all) the four grades of society to follow their respective duties on this terrestrial plane.

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

शतैरिष्ट्वा – शतैः + इष्ट्वा (विसर्ग-सन्धिः)

| | | |
|---|---|---|
| कोट्ययुतम् | – | कोटि + अयुतम् (यण्-सन्धिः) |
| विद्वद्भ्यो विधिपूर्वकम् | – | विद्वद्भ्यः + विधिपूर्वकम् (विसर्ग-सन्धिः) |
| ब्राह्मणेभ्यो महायशाः | – | ब्राह्मणेभ्यः + महायशाः (विसर्ग-सन्धिः) |
| राजवंशाञ्छतगुणान् | – | राजवंशान् + शतगुणान् (श्चुत्वं छत्वं च) |
| लोकेऽस्मिन् | – | लोके + अस्मिन् (पूर्वरूपम्) |

**(ख) समासः**

| | | |
|---|---|---|
| अश्वमेधशतैः | – | अश्वमेधानां शतम् अश्वमेधशतं (ष० तत्पु०) तैः |
| बहुसुवर्णकैः | – | बहु सुवर्णं येषु तैः (बहुव्रीहिः) |
| कोट्ययुतम् | – | कोटीनाम् अयुतम् (ष० तत्पु०) |
| असंख्येयम् | – | न संख्येयम् असंख्येयम् (नञ्-तत्पु०) |
| महायशाः | – | महद् यशः यस्य सः (बहुव्रीहिः) |
| राजवंशान् | – | राज्ञः वंशाः राजवंशाः तान् (ष० तत्पु०) |
| शतगुणान् | – | शतं गुणाः येषु तान् (बहुव्रीहिः) |
| विधिपूर्वकम् | – | विधिः पूर्वः यस्मिन् (बहुव्रीहिः) |

**(ग) कृदन्तौ**

| | | |
|---|---|---|
| इष्ट्वा | – | यज् + क्त्वा |
| दत्त्वा | – | दा + क्त्वा |

**(घ) तद्धितान्तौ**

| | | |
|---|---|---|
| राघवः | – | रघु + अण् (तस्यापत्यम्) |
| चातुर्वर्ण्यम् | – | चतुर्वर्ण + ष्यञ् (स्वार्थे ष्यञ्) |

---

## अभ्यासः – 70

**(श्लोकः 94½, 95, 96)**

1. **श्लोकस्थानि समस्तपदानि सङ्कलय्य समासनाम विग्रहवाक्यं च लिखत–**

[ **श्लोकस्थ-समस्तपदों को चुनकर समासनाम एवं विग्रह वाक्य लिखें।** Collect the compound words from the verses and write the compound names alongwith their analytical sentence.]

**यथा– राजवंशान् – राज्ञः वंशान् ष० तत्पुरुषः**

।

.................... ।

।

।

.................... ।

.................... ।

।

2. **श्लोकस्थ-विसर्गसन्धियुक्त-पदानि सङ्कलय्य सन्धिविच्छेदं कुरुत–**

[**श्लोकस्थ विसर्ग सन्धियुक्त पदों को चुनकर सन्धि विच्छेद करें।** Compile the words having *visargasandhi* in the verse and disjoin them.]

**यथा–** अश्वमेधशतैरिष्ट्वा = **अश्वमेधशतैः इष्ट्वा**

.................... =

.................... =

3. **यथोचितं योजयत–**

[**यथोचित मिलाएँ।** Match with the appropriate one.]

**यथा–**

| | | | |
|---|---|---|---|
| (i) | राजवंशान् | (क) | अ० नपुं० द्विती० एक० |
| (ii) | गवाम् | (ख) | नि+युज्- कर्तरि लृट् प्रपु० एक० |
| (iii) | धर्मे | (ग) | ओ० स्त्री० ष० बहु० |
| (iv) | नियोक्ष्यति | (घ) | अ० पुं० द्विती० बहु० समस्तम् |
| (v) | दत्त्वा | (ङ) | अ० पुं० प्र० एक० |
| (vi) | बहुसुवर्णकैः | (च) | तद्धितान्तम् अव्ययम् |
| (vii) | राघवः | (छ) | अ० पुं० च० बहु० |
| (viii) | धनम् | (ज) | अ० पुं० तृ० बहु० समस्तम् |
| (ix) | ब्राह्मणेभ्यः | (झ) | क्त्वान्तमव्ययम् |
| (x) | तथा | (ञ) | अ० पुं०/नपुं० स० एक० |

4. **शब्दरूपं पूरयत—**
[ **शब्दरूप पूरा करें।** Complete the declension.]

| | | | | |
|---|---|---|---|---|
| **यथा—** | (क) | **अश्वमेधशतेन** | **अश्वमेधशताभ्याम्** | **अश्वमेधशतैः** |
| | (ख) | | | गवाम् |
| | (ग) | कोट्ययुतम् | | |
| | (घ) | | | विद्वद्भ्यः (चतुर्थी) |
| | (ङ) | धनम् | | |
| | (च) | | | ब्राह्मणेभ्यः (चतुर्थी) |
| | (छ) | महायशाः | | |
| | (ज) | | | राजवंशान् |
| | (झ) | राघवः | | |
| | (ञ) | धर्मे | | |

5. **श्लोकात् सम्प्रदान-कारकस्य उदाहरणद्वयं चिनुत श्लोकातिरिक्तम् उदाहरणद्वयं च लिखत—**
[ **श्लोक से सम्प्रदान कारक के दो उदाहरण चुनें और श्लोक के अतिरिक्त दो उदाहरण लिखें।** Collect two examples of dative case from the verses and write two more examples of your own.]

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि पृथक् पत्रे लिखत-**
[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) यज् (लटि, लृटि, लङि च) (ख) शत (ग) विद्वस् (घ) विधिपूर्वक (ङ) नि + युज् (लटि लृटि च) (ङ) स्था + णिच् (लटि लृटि च)

**श्लोकः**

**दशवर्षसहस्राणि दशवर्षशतानि च।**
**रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥ 97 ॥**

**पदच्छेदः**

दश-वर्ष-सहस्राणि दश-वर्ष-शतानि च।
रामः राज्यम् उपासित्वा ब्रह्मलोकं प्र-यास्यति ॥ 97 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| दशवर्षसहस्राणि | अ० नपुं० द्वितीं० बहु० समस्तम् | उपासित्वा | क्त्वान्तम् अव्ययम् |
| दशवर्षशतानि | अ० नपुं० द्वितीं० बहु० समस्तम् | ब्रह्मलोकम् | अ० पुं० द्वितीं० एक० समस्तम् |
| राज्यम् | अ० नपुं० द्वितीं० एक० | प्रयास्यति | प्र+या- कर्तरि लृट् प्रपु० एक० |

**आकाङ्क्षा**

**प्रयास्यति।**

| | |
|---|---|
| कः प्रयास्यति ? | रामः प्रयास्यति। |
| सः कं प्रयास्यति ? | सः ब्रह्मलोकं प्रयास्यति। |
| सः किं कृत्वा प्रयास्यति ? | सः उपासित्वा प्रयास्यति। |
| किम् उपासित्वा प्रयास्यति ? | राज्यम् उपासित्वा प्रयास्यति। |
| कियत्-कालपर्यन्तं राज्यम् उपासित्वा ब्रह्मलोकं प्रयास्यति ? | दशवर्षसहस्राणि दशवर्षशतानि च राज्यम् उपासित्वा ब्रह्मलोकं प्रयास्यति। |

**अन्वयः**

रामः दशवर्षसहस्राणि दशवर्षशतानि च राज्यम् उपासित्वा ब्रह्मलोकं प्रयास्यति।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| रामः | राघवः | राम | Śrī Rāma |
| दशवर्षसहस्राणि | दशवर्षसहस्राणि | दश हजार वर्ष | ten thousand years |
| दशवर्षशतानि | दशवर्षशतानि | एक हजार वर्ष | one thousand years |
| च | च | और | and |
| राज्यम् | साम्राज्यम् | राज्य (की) | (his) kindgdom |
| उपासित्वा | संसेव्य | सेवा करके | having served |
| ब्रह्मलोकम् | परमं लोकम् | ब्रह्मलोक को | to *Brahmaloka* |
| प्रयास्यति | गमिष्यति | जाएगा | will ascend |

**भावार्थः**

**संस्कृतम्**– श्रीराघवः एकादशसहस्रसंवत्सरान् साम्राज्यं संसेव्य ब्रह्मलोकम् एष्यति।

**हिन्दी**– श्रीराम ग्यारह हजार वर्ष राज्य की सेवा करके परम लोक को प्राप्त करेगें।

**आंग्लम्**– Having served his kingdom for eleven thousand years, Śrī Rāma will ascend to Brahmaloka (the highest heaven).

## निदर्शनम्

(i) **व्याकरणम्**

**(क) सन्धिः**

रामो राज्यम् – रामः + राज्यम् (विसर्ग-सन्धिः)

**(ख) समासः**

ब्रह्मलोकम् – ब्रह्मणः लोकः ब्रह्मलोकः (ष० तत्पु०) तम्

**(ग) कृदन्तः**

उपासित्वा – उप + आस् + क्त्वा (आर्षः प्रयोगः; उपास्य इति ल्यपा भाव्यम्)

## अभ्यासः - 71
### (श्लोकः 97)

1. **कर्तरि/कर्मणि परिवर्तयत–**
[ **वाच्य-परिवर्तन करें।** Change the voice.]

**यथा–** रामः ब्रह्मलोकं प्रयास्यति। (कर्तरि)
**रामेण ब्रह्मलोकः प्रयास्यते** ............। (कर्मणि)

(क) रामः वनं यास्यति। (कर्तरि)
............। (कर्मणि)

(ख) हनुमान् लङ्कां यास्यति। (कर्तरि)
। (कर्मणि)

(ग) रामेण सीता दृष्टा। (कर्मणि)
............। (कर्तरि)

(घ) सीतया रामः इष्यते। (कर्मणि)
............। (कर्तरि)

(ङ) विभीषणः रामस्य शरणं गच्छति। (कर्तरि)
............। (कर्मणि)

2. **असमानं शब्दं पृथक्कुरुत–**
[ **असमान शब्द को अलग करें।** Separate the odd word.]

(क) दश, शतम्, सहस्रम्, वर्षम् ।

(ख) रामः, दाशरथिः, भागीरथी, राघवः ............।

(ग) लोकः, संसारः, अग्निः, विश्वम् ।

(घ) राजा, मन्त्री, नृपः, भूपतिः ............।

(ङ) च, तस्य, एव, न, तथा ............।

**3. सत्यम् ✔ असत्यं × वा लिखत–**

**[ सत्य ✔ या असत्य × लिखें।** Write true ✔ or false ×.]

(क) रामः एकादशवर्षसहस्राणि राज्यम् उपासित्वा ब्रह्मलोकं प्रयास्यति। ☐

(ख) 'उपासित्वा' इति आर्षः प्रयोगः। ☐

(ग) उपास्य इत्यत्र क्त्वाप्रत्ययः वर्तते। ☐

(घ) प्रयास्यति लृटि क्रियापदम्। ☐

(ङ) 'रामः' इति मुख्यं कर्मपदम्। ☐

**4. रिक्तस्थानं पूरयत–**

**[ रिक्तस्थान पूरा करें।** Fill in the blanks.]

**यथा–** **ब्रह्मणः लोकः ब्रह्मलोकः तम्** = ब्रह्मलोकम्

............ = देवलोकम्

............ = विष्णुलोकम्

............ = शिवलोकम्

............ = पितृलोकम्

**5. क्रियारूपं पूरयत–**

**[ क्रियारूप पूरा करें।** Complete the verbal forms.]

| | | | |
|---|---|---|---|
| प्रयाति | ............ | प्रयान्ति। | प्रयास्यति ............ ............ । |
| ............ | प्रयाथः | ............ । | ............ ............ प्रयास्यथ। |
| ............ | ............ | प्रयामः। | ............ ............ प्रयास्यामः। |

**श्लोकः**

**इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् ।**
**यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते ॥ 98 ॥**

**पदच्छेदः**

इदम् पवित्रम् पापघ्नम् पुण्यम् वैदैः च सम्मितम् ।
यः पठेत् राम-चरितम् सर्व-पापैः प्र-मुच्यते ॥ 98 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| इदम् | म् सर्व० नपुं० द्विती० एक० | यः | यद् द्० सर्व० पुं० प्र० एक० |
| पवित्रम् | अ० नपुं० द्विती० एक० | पठेत् | पठ्- कर्तरि लिङ् प्रपु० एक० |
| पापघ्नम् | अ० नपुं० द्विती० एक० | | |
| पुण्यम् | अ० नपुं० द्विती० एक० | रामचरितम् | अ० नपुं० द्विती० एक० समस्तम् |
| वेदैः | अ० पुं० तृ० बहु० | | |
| सम्मितम् | अ० नपुं० द्विती० एक० | सर्वपापैः | अ० पुं० तृ० बहु० समस्तम् |
| | | प्रमुच्यते | प्र + मुच्- कर्मणि लट् प्रपु० एक० |

**आकाङ्क्षा**

**पठेत् ।**

| | |
|---|---|
| कः पठेत् ? | यः (कोऽपि) पठेत् । |
| किं पठेत् ? | इदं रामचरितं पठेत् । |
| कीदृशं रामचरितं पठेत् ? | पवित्रं रामचरितं पठेत् । |
| पुनः कीदृशम् ? | पापघ्नम् । |
| पुनश्च कीदृशम् ? | सम्मितम् । |
| कैः सम्मितम् ? | वेदैः सम्मितम् । |
| तर्हि किम् ? | प्रमुच्यते । |
| कैः प्रमुच्यते ? | सर्वपापैः प्रमुच्यते । |

**अन्वयः**

इदं पवित्रं पापघ्नं पुण्यं वैदेश्च सम्मितं रामचरितं यः पठेत् सर्वपापैः प्रमुच्यते ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| इदम् | एतत् रामचरितम् | यह राम का चरित | this (narrative story of Rāma) |
| पवित्रम् | पूतम् | पवित्र | capable of purify-ing |
| पापघ्नम् | कलुषहरम् | पापनाशक | capable of wiping out sins |
| पुण्यम् | पुण्यप्रदम् | पुण्य | sacred |
| वेदैश्च सम्मितम् | श्रुतिभिः अनुमोदितम् | वेदों से सम्मत | treated as par with the *Vedas* |
| रामचरितम् | रामस्य वृत्तम् | राम की कथा | narrative of Śrī Rāma |
| यः | यः जनः | जो (व्यक्ति) | (he) who |
| पठेत् | संगिरेत् | पढे | reads |
| सर्वपापैः | सर्वैः अघैः | सभी पापों से | from all sins |
| प्रमुच्यते | मुक्तः भवति | मुक्त हो जाता है | will be completely absolved |

**भावार्थः**

**संस्कृतम्**– यः कोऽपि जनः एतत् पूतं कलुषरहितं सुकृतं श्रुतिभिः सम्मितं रामस्य वृत्तं पठेत् सः सर्वेभ्यः पापेभ्यः मुक्तः भवति ।

**हिन्दी**– जो भी व्यक्ति इस निष्पाप पुण्यप्रद तथा वेदानुसारी राम के चरित्र को पढ़ेगा वह सभी पापों से मुक्त जाएगा ।

**आंग्लम्**– He who reads this sacred narrative of ŚrīRāma, which is capable of purifying the mind and wiping out sins and is treated on a par with the Vedas, is completely absolved from all sins.

**निदर्शनम्**

(i) **व्याकरणम्**

**(क) सन्धिः**

वेदैश्च – वेदैः + च (विसर्गसन्धिः/श्चुत्वम्)

पठेद्रामचरितम् – पठेत् + रामचरितम् (जश्त्वम्)

**(ख) समासः**

पापघ्नम् – पापं हन्ति इति पापघ्नम् (उपपद-तत्पु०)

रामचरितम् – रामस्य चरितम् (ष० तत्पु०)

सर्वपापैः – सर्वाणि पापानि सर्वपापानि तैः (कर्मधारयः)

**(ग) कृदन्ताः**

सम्मितम् – सम् + मा + क्त

पवित्रम् – पूञ् + इत्र (पूयते अनेन इति पवित्रम् 'कर्तरि चर्षिदेवतयोः' इति करणे इत्र प्रत्ययः)

पापघ्नम् – पाप + हन् + टक् (अमनुष्यकर्तृके च)

---

## अभ्यासः - 72

### (श्लोकः 98)

1. **श्लोकं पठित्वा उत्तरं लिखत–**

[**श्लोक पढ़कर और उत्तर दें।** Read the verse and answer the questions.]

(क) रामचरितम् इत्यस्य कः अर्थः अस्ति ?

(ख) रामचरितं कीदृशम् अस्ति ?

(ग) रामचरितस्य पठनेन कः लाभः भवति ?

(घ) प्रमुच्यते इत्यत्रः कः धातुः ?

(ङ) रामचरितं कैः सम्मितम् ?

2. **समानार्थकं शब्दं लिखत–**

[**समानार्थक शब्द लिखें।** Write the synonyms.]

**यथा–** (क) पवित्रम् = **पूतम्, पावनम्** (ख) सम्मितम् =

(ग) पापम् = (घ) पुण्यम् =

(ङ) चरितम् = (च) वेदः =

3. **विपरीतार्थकं शब्दं लिखत–**

[ **विपरीतार्थक शब्द लिखें।** Write the antonym.]

**यथा–** (क) पवित्रम् = **अपवित्रम्** (ख) पापम् =

(ग) पुण्यम् = (घ) प्रमुच्यते =

(ङ) पापघ्नम् =

4. **असमानं शब्दं पृथक्कुरुत–**

[ **असमान शब्द को अलग करें।** Separate the odd word.]

**यथा–** (क) पापम्, कल्मषम्, अघम्, पुण्यम् **पुण्यम्**

(ख) पूतम्, पवित्रम्, अशुचिः, पावनम्

(ग) चरितम्, आख्यानम्, आख्यायिका, कविता

(घ) वेदः, श्रुतिः, संहिता, स्मृतिः

(ङ) पठेत्, अध्ययनं कुर्यात्, विस्मरेत्, स्वाध्यायं कुर्यात्

5. **उत्तरं लिखत–**

[ **उत्तर लिखें।** Answer the questions.]

**यथा–** (क) चत्वारः वेदाः = **ऋक्**, **यजुः**, **साम**, **अथर्वा**

(ख) चतस्रः वाचः = ........, ........, ........,

(ग) चत्वारि युगानि = ........, ........, ........,

(घ) चत्वारि धामानि = ........, ........, ........,

(ङ) चतस्रः अवस्थाः = ........, ........, ........,

(च) चत्वारः आश्रमाः = ........, ........, ........,

**श्लोकः**

**एतदाख्यानमायुष्यं पठन् रामायणं नरः ।**
**सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ 99 ॥**

**पदच्छेदः**

एतत् आख्यानम् आयुष्यं पठन् रामायणं नरः ।
स-पुत्र-पौत्रः स-गणः प्रेत्य स्वर्गे महीयते ॥ 99 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| एतत् | एतद्- द्० सर्व० नपुं० द्विती० एक० | सपुत्रपौत्रः | अ० पुं० प्र० एक० समस्तम् |
| आख्यानम् | अ० नपुं० द्विती० एक० | सगणः | अ० पुं० प्र० एक० समस्तम् |
| आयुष्यम् | अ० नपुं० द्विती० एक० | | |
| पठन् | पठत्- त्० पुं० प्र० एक० | प्रेत्य | ल्यबन्तम् अव्ययम् |
| रामायणम् | पठत्- त्० नपुं० द्विती० एक० | स्वर्गे | अ० पुं० स० एक० |
| | | महीयते | कर्मणि लट् प्रपु० एक० |
| नरः | अ० पुं० प्र० एक० समस्तम् | | |

**आकाङ्क्षा**

**महीयते ।**

| | |
|---|---|
| कः महीयते ? | नरः महीयते । |
| कः नरः महीयते ? | पठन् नरः महीयते । |
| किं पठन् नरः महीयते ? | एतद् आख्यानं पठन् नरः महीयते । |
| किंनामकम् आख्यानम् ? | रामायणम् । |
| कीदृशम् ? | आयुष्यम् । |
| केन सह महीयते ? | सपुत्रपौत्रः महीयते । |
| पुनः कीदृशः ? | सगणः । |
| किं कृत्वा महीयते ? | प्रेत्य महीयते । |
| कुत्र महीयते ? | स्वर्गे महीयते । |

**अन्वयः**

एतद् आयुष्यम् आख्यानं रामायणं पठन् नरः सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| एतद् | इदम् | यह | this |
| आयुष्यम् | आयुर्बलहेतुभूतम् | दीर्घायुष्य कारक | conducive to longevity |
| आख्यानम् | कथाम् | कथा को | narrative |
| रामायणम् | रामचरितम् | रामायण को | related to Rāma |
| पठन् | अधीयानः | पढ़ता हुआ | reading |
| नरः | जनः | मनुष्य | a man |
| सपुत्रपौत्रः | पुत्रपौत्रसहितः | पुत्र पौत्र के साथ | along with his sons and grand-sons |
| सगणः | सभृत्यबन्धुः | अनुयायियों के साथ | alongwith his followers and attendands |
| प्रेत्य | शरीरं त्यक्त्वा | शरीर त्याग कर | having departed from this world |
| स्वर्गे | स्वर्गलोके | स्वर्ग लोक में | in heaven |
| महीयते | पूज्यते | पूजा जाता है | be honoured |

**भावार्थः**

**संस्कृतम्**– इमाम् आयुःकारिकां रामायणीं कथां पठन् जनः पुत्रपौत्रादिसन्ततिभिः सह सभृत्यबन्धुः अस्मात् लोकात् गत्वा स्वर्गलोके पूज्यते।

**हिन्दी**– दीर्घायुष्य कारक इस राम कथा (रामायण) को पढ़कर मनुष्य शरीर त्यागने के बाद पुत्र, पौत्र एवं अनुयायियों के साथ स्वर्गलोक में पूजा जाता है।

**आंग्लम्**– Reading this narrative centering round Śrī Rāma and conducive to longevity, a man shall on departing from this world be honoured in heaven alongwith his sons and grandsons as well as his followers and attendants.

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

एतदाख्यानम् – एतत् + आख्यानम् (जश्त्वम्)

(ख) **समासः**

सपुत्रपौत्रः – पुत्राश्च पौत्राश्च पुत्रपौत्राः (द्वन्द्व); पुत्रपौत्रैः सह (बहुव्रीहिः)

सगणः – गणैः सह सगणः (बहुव्रीहिः)

रामायणम् – रामोऽयनं प्रतिपाद्यो यस्य तत् (बहुव्रीहिः); यद्वा रामस्य अयनम् (ष० तत्पु०)

(ग) **कृदन्तौ**

पठन् – पठ् + शतृ = पठत्

प्रेत्य – प्र + इण् + ल्यप्

(घ) **तद्धितान्तः**

आयुष्यम् – आयुष् + यत् (आयुः प्रयोजनम् अस्य, 'स्वर्गादिभ्यो यद्वक्तव्यः')

(ii) **पर्यायवाचिनः शब्दाः**

आख्यानम् – आख्यायिका, चरितम्, कथा, कथानकम्

---

### अभ्यासः - 73
### (श्लोकः 99)

1. **यथोचितं योजयत—**

[ **उचित योग बनाएं।** Match with the appropriate one.]

**यथा—**

| | | | |
|---|---|---|---|
| (i) | आख्यानम् | (क) | सुतः |
| (ii) | रामायणम् | (ख) | कथाम् |
| (iii) | नरः | (ग) | दिवि |
| (iv) | पुत्रः | (घ) | रामचरितम् |
| (v) | प्रेत्य | (ङ) | जनः |
| (vi) | स्वर्गे | (च) | गत्वा |

2. **विग्रहवाक्यं लिखत—**

[**विग्रहवाक्य लिखें।** Write the analytical sentence.]

**यथा—** (i) सगणः = **गणैः सह** (ii) सपुत्रः =

(iii) सपुत्रपौत्रः = (iv) सपुत्रकलत्रः =

(v) सबान्धवः = (vi) सहरिः =

3. **लिङ्गं, विभक्तिं, वचनं च लिखत—**

[**लिङ्ग, विभक्ति और वचन लिखें।** Write the gender, case and number.]

**यथा—** (i) एतद् **नपुं०** **प्र०** **एक०**

(ii) आख्यानम्

(iii) आयुष्यम्

(iv) रामायणम्

(v) नरः

(vi) सपुत्रपौत्रः

(vii) सगणः

(viii) स्वर्गे

4. **यथानिर्देशं शब्दरूपं लिखत—**

[**यथानिर्देशं शब्दरूप लिखें।** Write the declension as directed.]

**यथा—** (i) (पठ्) **पठन्** **पठन्तौ** **पठन्तः** (प्रथमा)

(ii) (गम्) (द्वितीया)

(iii) (लिख्) (तृतीया)

(iv) (चल्) (चतुर्थी)

(v) (धाव्) (पञ्चमी)

(vi) (खेल्) (षष्ठी)

(vii) (पत्) (सप्तमी)

5. **यथोदाहरणं रिक्तस्थानं पूरयत–**

[ **उदाहरण के अनुसार रिक्तस्थान भरें।** Fill in the blanks as shown in the example.]

**यथा–** (i) प्रेत्य = ..................**प्रैति**..................

(ii) अभिगम्य =

(iii) प्रदाय =

(iv) अधीत्य =

(v) आनीय =

(vi) सम्प्रेष्य =

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत–**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) सगण (ख) प्रेत्य (ग) मह् (लटि, लृटि, लोटि लङि च)

**श्लोकः**

**पठन् द्विजो वागृषभत्वमीयात् स्यात् क्षत्रियो भूमिपतित्वमीयात् ।**
**वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ 100 ॥**

**पदच्छेदः**

पठन् द्विजः वाक् ऋषभत्वम् ईयात् स्यात् क्षत्रियः भूमि-पतित्वम् ईयात् ।
वणिक् जनः पण्य-फलत्वम् ईयात् जनः च शूद्रः अपि महत्त्वम् ईयात् ॥ 100 ॥

**पदपरिचयः**

| पदम् | विश्लेषणम् | पदम् | विश्लेषणम् |
|---|---|---|---|
| पठन् | तृ० पुं० प्र० एक० | भूमिपतित्वम् | अ० नपुं० द्विती० एक० समस्तम् |
| द्विजः | अ० पुं० प्र० एक० | वणिग्जनः | अ० पुं० प्र० एक० समस्तम् |
| वागृषभत्वम् | अ० नपुं० द्विती० एक० समस्तम् | पण्यफलत्वम् | अ० नपुं० द्विती० एक० समस्तम् |
| ईयात् | इण्- कर्तरि आशिर्लिङि प्रपु० एक० | जनः | अ० पुं० प्र० एक० |
| स्यात् | अस् कर्तरि विधिलिङि प्रपु० एक० | च | अव्ययम् |
| क्षत्रियः | अ० पु० प्र० एक० | शूद्रः | अ० पुं० प्र० एक० |
| | | महत्त्वम् | अ० नपुं० द्विती० एक० |

**आकाङ्क्षा**

**ईयात् ।**

| | |
|---|---|
| किम् ईयात् ? | वागृषभत्वम् ईयात् । |
| कः वागृषभत्वम् ईयात् ? | द्विजः वागृषभत्वम् ईयात् । |
| किं कुर्वन् ? | पठन् । |
| पुनः किम् ईयात् ? | भूमिपतित्वम् ईयात् । |
| कः भूमिपतित्वम् ईयात् ? | क्षत्रियः भूमिपतित्वम् ईयात् । |
| पुनः किम् ईयात् ? | पण्यफलत्वम् ईयात् । |

कः पण्यफलत्वम् ईयात् ?  वणिग्जनः पण्यफलत्वम् ईयात् ।
पुनः किम् ईयात् ?  महत्त्वम् ईयात् ।
कः महत्त्वम् ईयात् ?  शूद्रः जनः अपि महत्त्वम् ईयात् ।

**अन्वयः**

द्विजः पठन् वागृषभत्वम् ईयात् स्यात् क्षत्रियः भूमिपतित्वम् ईयात् वणिग्जनः पण्यफलत्वम् ईयात् शूद्रः जनः च अपि महत्त्वम् ईयात् ।

**पदार्थः**

| पदम् | संस्कृतम् | हिन्दी | आंग्लम् |
|---|---|---|---|
| द्विजः | विप्रः | ब्राह्मण | a brāhmin |
| पठन् | अधीयानः | पढ़ता हुआ | by reading (it) |
| वागृषभत्वम् | वाक्पटुत्वम् | वाक्चातुर्य | fair to attain eminence in eloquence |
| ईयात् | प्राप्नुयात् | प्राप्त करे | may attain |
| स्यात् | यदि | यदि | if |
| क्षत्रियः | क्षत्रियकुलोत्पन्नः | क्षत्रिय | a kṣtriya |
| भूमिपतित्वम् | पृथिवीश्वरत्वम् | भूमि के स्वामित्व को | lordship over the earth |
| ईयात् | लप्सीष्ट | प्राप्त करे | may attain |
| वणिग्जनः | वैश्यः | वैश्य | a mercant |
| पण्यफलत्वम् | धनधान्यवृद्धिम् | व्यापारलाभ | profit in trade |
| ईयात् | लभताम् | प्राप्त करे | may secure |
| शूद्रः जनः | शूद्रवर्णविशिष्टः | शूद्र वर्ग का व्यक्ति | man belonging to Śūdra class |
| च | च | और | and |
| अपि | अपि | भी | also |
| महत्त्वम् | श्रेष्ठताम् | महत्त्व को | to superiority |
| ईयात् | प्राप्नोतु | प्राप्त करे | may attain |

**भावार्थः**

**संस्कृतम्**– रामायणं पठन् द्विजः वाक्पटुत्वं प्राप्नोतु, यदि क्षत्रियकुलोत्पन्नः तर्हि पृथिवीश्वरत्वं लभताम्। वैश्यश्चेत् धनधान्यवृद्धिं तथा च शूद्रः जनः अपि श्रेष्ठताम् विन्दताम्।

**हिन्दी**– इस रामायण को पढकर ब्राह्मण वाक्चातुर्य प्राप्त करे, यदि क्षत्रिय है तो भूमि के स्वामित्व को प्राप्त करे। वैश्य होने से व्यापार में लाभ प्राप्त करे तथा शूद्र को भी महत्त्व प्राप्त हो।

**आंग्लम्**– Reading it a Brāhmaṇa bids fair to attain eminence in eloquence; if he is a Kṣatriya, he is sure to attain lordship over the earth; a man belonging to the mercantile community is sure to secure profit in trade and a man belonging to the *Śūdra* class can hope to attain superiority (in his own class).

## निदर्शनम्

(i) **व्याकरणम्**

(क) **सन्धिः**

| | | |
|---|---|---|
| द्विजो-वागृषभत्वम् | – | द्विजः + वागृषभत्वम् (विसर्ग-सन्धिः) |
| वागृषभत्वम् | – | वाक् + ऋषभत्वम् (जश्त्व-सन्धिः) |
| क्षत्रियो भूमिपतित्वम् | – | क्षत्रियः + भूमिपतित्वम् (विसर्ग-सन्धिः) |
| वणिग्जनः | – | वणिक् + जनः (जश्त्व-सन्धिः) |
| ईयाज्जनः | – | ईयात् + जनः (श्चुत्व/जश्त्व-सन्धिः) |
| जनश्च | – | जनः + च (विसर्ग/श्चुत्व-सन्धिः) |
| शूद्रोऽपि | – | शूद्रः + अपि (विसर्ग/पूर्वरूप-सन्धिः) |

(ख) **समासः**

| | | |
|---|---|---|
| वागृषभत्वम् | – | वाचि ऋषभत्वम् (स० तत्पु०) |
| भूमिपतित्वम् | – | भूमेः पतित्वम् (ष० तत्पु०) |
| वणिग्जनः | – | वणिक् चासौ जनः (कर्मधारयः) |
| पण्यफलत्वम् | – | पण्यं च तत् फलम् पण्यफलम् (कर्मधारयः) तस्य भावः पण्यफलत्वम् |

(ग) **कृदन्तः**

| | | |
|---|---|---|
| पठन् | – | पठ् + शतृ = पठत् |

(घ) **तद्धितान्ताः**

| | | |
|---|---|---|
| ऋषभत्वम् | – | ऋषभ + त्व = ऋषभत्व (तस्य भावस्त्वतलौ) |
| पतित्वम् | – | पति + त्व = पतित्व |
| फलत्वम् | – | फल + त्व = फलत्व |
| महत्त्वम् | – | महत् + त्व = महत्त्व |

**अवधेयम्**

**त्व-तल्-प्रत्ययविषये**

---

## अभ्यासः - 74

### (श्लोकः 100)

1. **समानार्थकं शब्दं लिखत–**

   [**समानार्थक शब्द लिखें।** Write the synonyms.]

**यथा–** (क) द्विजः = **ब्राह्मणः**

(ख) वाक् =

(ग) ऋषभत्वम् =

(घ) भूमिपतित्वम् =

(ङ) वणिक् =

(च) महत्त्वम् =

2. **अस्मिन् श्लोके कस्मिन् लकारे तिङन्त-प्रयोगः अस्ति। तस्य लकारस्य च श्लोकातिरिक्तानि पञ्च उदाहरणानि लिखत–**

   [**इस श्लोक में किस लकार में तिङन्त प्रयोग है, उसी लकार में श्लोकातिरिक्त पाँच उदाहरण लिखें।** Which *lakāra* is used as *tiṅanta* in this verse. Give five more examples of that *lakāra*, different to ones used in the verse.]

3. **त्वप्रत्ययान्तं शब्दं तल्-प्रत्ययान्ते परिवर्तयत–**

   [**त्व-प्रत्ययान्त शब्द को तल्-प्रत्ययान्त शब्द में बदलें।** Change the word ending in *tva* to ending in *tal.*]

**यथा–** (क) ऋषभत्वम् = **ऋषभता**

(ख) महत्त्वम् =

(ग) पण्यफलत्वम् =

(घ) भूमिपतित्वम् =

(ङ) सज्जनत्वम् =

(च) चपलत्वम् =

4. **शब्दरूपं पूरयत–**

[**शब्दरूप पूरा करें।** Complete the declension.]

| | | | | | | |
|---|---|---|---|---|---|---|
| **यथा–** (क) | द्विज | **द्विजः** | **द्विजौ** | **द्विजाः** | (प्रथमा) |
| (ख) | वाक् | वाचम् | | | (द्वितीया) |
| (ग) | वणिज् | वणिजा | | | (तृतीया) |
| (घ) | जन | | | | (चतुर्थी) |
| (ङ) | फल | | | | (पञ्चमी) |
| (च) | शूद्र | | | | (षष्ठी) |
| (छ) | महत्त्व | | | | (सप्तमी) |

5. **बालकाण्डस्थां संक्षिप्तां रामायणीं कथां सरल-संस्कृत-भाषया दशसु वाक्येषु लिखत–**

[**रामायण में वर्णित राम कथा को सरल संस्कृत भाषा में दस वाक्यों में लिखें।** Write the story of Rāmāyaṇa in ten sentences of simple Sanskrit.]

6. **अत्र प्रदत्तान् शब्दान् प्रयुज्य कतिचन वाक्यानि लिखत-**

[ **दिए गए शब्दों का प्रयोग करते हुए कुछ वाक्य बनाएँ।** Construct some sentences using the words given below. ]

(क) इण् (गतौ- लटि, लृटि, विधौ आशिषि लिङि च) (ख) महत्त्व (ग) पठत् (घ) जन

.................................................................................................................................................

.................................................................................................................................................

# परिशिष्टम्
# (संक्षेपरामायणपदानुक्रमणी)

